# सांख्य-सारः






तर्काचार्य्य

मूल्यं द्वादशाणकम् ॥॥०

( सटीकानुवादः )

# सांख्य-सारः

[ विज्ञान भिक्षुकृतः ]

---

संस्कृतसाहित्य-परिषदाचार्य्य-

श्रीकालीपदतर्काचार्य्येण

स्वकृत "सारप्रभा" टीका-वङ्गभाषानुवादाभ्यां समलङ्कृत्य

सम्पादितः




संस्कृतसाहित्यपरिषत्पत्रिका

सह-सम्पादक—

श्रीमदुपेन्द्रमोहनपुराणशास्त्रि-काव्य-सांख्यतीर्थेन

संशोधितः

*Published by*

**Janaki Nath Kavyatirtha & Brothers**

( Proprietors )

**Chhatra Pustakalaya**

Nivedita Lane Bagbazar,

*Calcutta*

**1930.**

मूल्यं द्वादशाणकम्—॥०

88
R.

# निवेदनम्

मान्या दर्शनविविदिषवः! सुविदितमेवेदं भवतां यदयं सांख्यसाराख्यग्रन्थः समीचीन एवोपायः कापिलशास्त्रतत्त्वमधिजिगांसूनामिति। अस्ति चायम् अध्येयः सांख्यशास्त्रीयपरीक्षायामिति विशेषतो विद्यार्थिभिरुपादेयश्च। तदस्य समीचीनटीकाभाषानुवादादिविरहेणैतावत्कालं दुरूहार्थतया बहुभिरेव प्रोत्साहिता वयमेतस्य साङ्गस्य प्रकाशनविधौ। किन्तु नानाविधदैवदुर्व्विपाकवशादारभ्यापि कार्य्यमल्पेन न पारितमिदं समयेन प्रकाशयितुमिति त्रपादुर्म्मनायमानतामात्मनो विज्ञापयामः। अत्र किल संस्करणे मूलं, तदनुसारिणी नातिविस्तृता टीका वङ्गभाषयानुवादश्च संन्यवेश्यन्त। यद्यनेन साङ्गेन ग्रन्थेन विद्यार्थिप्रभृतीनामुपकारः स्वल्पोऽपि स्यात्तदैव वयं सफलप्रयासा भविष्याम इति।

संस्कृतसाहित्यपरिषद्
१३२७ वङ्गाब्दीय-
दशहरावासरे।

आश्रव-
सम्पादकस्य

संस्कृत-साहित्य-परिषदाचार्य-मुक्तिदीपिकादिटीकाकार-

श्रीयुक्त-कालीपदतर्काचार्य्य-सम्पादित—

# सांख्यकारिका

( गौड़पादभाष्य-भाष्यप्रभाख्यटीका-वङ्गानुवादैः समलङ्कृता )

सांख्यकारिका नाम सांख्यतत्त्वप्रतिपादकः परमोपादेयः प्रमाणग्रन्थः। अस्य ग्रन्थस्य वाचस्पतिमिश्रेण तत्त्वकौमुदी, माठराचार्य्येण माठरवृत्तिः, गौड़पादाचार्य्येण गौड़पादभाष्यमित्येता व्याख्या निरमायिषत। तत्र गौड़पादाचार्य्यकृतभाष्यं कारिकासहितं सांख्यशास्त्रीयप्रथमपरीक्षायां निर्दिष्टं पाठ्यरूपेण वर्त्तते। परं गौड़पादभाष्यस्य बहुषु स्थलेषु दुरवबोधतया तेन विद्यार्थिनां जिज्ञासूनामपरेषाञ्च सांख्यतत्त्वावबोधो नैव सम्यक्तया सम्पद्यते, अत एवास्माभिर्गौड़पादभाष्यस्य भाष्यप्रभाख्यटीकया कारिकाया वङ्गभाषानुवादेन च समलङ्कृत्य सांख्यकारिका सम्पादिता प्रकाशिता च। नाद्य यावत् ईदृशस्य सभाष्य-सांख्यकारिकाग्रन्थस्य समीचीनं संस्करणं प्रकाशितं केनापि। तद् विद्यार्थिनः सांख्यतत्त्वबुभुत्सवश्च त्वरन्तामस्य संस्करणस्य संग्रहाय। मूल्यमप्यस्य ग्राहकाणां सौकर्य्यसाधनाय दशाणकमात्रमेव निर्दिष्टम्। तत् ‘दलं विलम्बः त्वरितुं हि वेला’ इति श्रीहर्षकविवचनमेव यथाकालमुच्यते।

प्रकाशकः—

छात्रपुस्तकालयः

निवेदितालेन बागबाजार कलिकाता।

# साङ्ख्यसारः

—*०*—

## पूर्व्वभागे

### प्रथमः परिच्छेदः ।

महदाख्यः स्वयम्भूर्यो जगदङ्कुर ईश्वरः ।
सर्वात्मने नमस्तस्मै विष्णवे सर्वजिष्णवे ॥ १

---

### सारप्रभा टीका

पित्रोः पदाम्भोजरजःसहायः
कालीपदाख्यो हरिदाससूनुः ।
तनोति टीकामिह साङ्ख्यसारे
सारप्रभां बालजनोपयोग्याम् ॥
मरालवृत्तयो धीरा दृष्टिमुत्सृज्य भूयसीम् ।
स्वगुणेन कलामात्रमपि गृह्णन्तु मे गुणाम् ॥

(१) अथ परमार्थतत्त्वविज्ञानकुशलः पेशलापेशलसकलार्थसन्दीपन-प्रवचनभाष्य-रहस्यदीचागुरुः श्रीमान् विज्ञानभिक्षुर्नाम शिष्टाचारानुमितश्रुतिबोधित-कर्त्तव्यताकं मङ्गलमाचरितुं शिष्यशिक्षायै निबध्नाति महदाख्य इति। यः महदाख्यः समष्टि-महत्तत्त्वाख्य आदिजीवः। समष्टिमहत्तत्त्वं हि प्रकृतेः प्रथमः परिणामः, स च कारण-विशेषानपेक्ष एव जैविकादृष्टवशात् सम्पद्यमानो जगत्सृष्टिमुपकुरुते। अत एव तस्य सर्व्वकारणविशुद्धत्वमभ्युदगतं विभाति। स्वयम्भ रिति—कारणविशेषानपेक्षोत्पत्तिक

इत्यर्थः। आदिसर्गे हि साधारणघटपटादिसृष्टाविव न कारणविशेषापेक्षा तदानीं विशेषभूतवस्त्वन्तराणामभावात्, अत एवास्य स्वयम्भूत्वम्। जगदङ्कुर इति—वृक्षस्य अङ्कुर इव सर्व्वस्य जगतः कारणभूत इत्यर्थः। तथाहि यथा वीजादङ्कुरः, अङ्कुराच्च वृक्षः, तथैव प्रकृतेः प्रथमपरिणामः महत्तत्त्वं समष्टिरूपं, तस्माच्च समग्रं जगदिति। अनेन प्रकृतेर्मूलकारणत्वं, महत्तत्त्वरूपस्य विष्णोर्य जन्यत्वे सति कारणत्वमङ्कुरवदित्याख्यातम्। कारणान्तरापेक्षया अस्य समुत्कर्षं सकलजगदुपादानत्वेनेति मन्तव्यम्। ईश्वर इति। ऐश्वर्य्यशाली। निरीश्वरवादे कापिले सांख्ये नित्येश्वरस्य अनभ्युपगमात् समष्टिमहत्तत्त्वरूपस्य विष्णोरीश्वरशब्दवाच्यत्वम्; ईश्वरासिद्धेरित्यादिसूत्रस्य ईदृशेश्वरसिद्धौ वाधकत्वायोगात्। अस्य ऐश्वर्य्ययोगश्च व्यक्ततामेष्यत्यग्रे। सर्वात्मने—सर्व्वकार्य्योपादानकारणतया सर्व्वकार्य्येष्वविभक्ताय इत्यर्थः। एतन्मते कार्य्यकारणयोरविभागात् सकलकार्य्यस्वरूपाय इत्यर्थः। विष्णवे व्यापकाय विपेर्व्याप्तयर्थस्य प्रकृते उपादानात्। तदुक्तं 'सर्व्वतः पाणिपादश्च सर्व्वतोऽक्षिशिरोमुखः। सर्व्वतः श्रुतिमाँल्लोके सर्व्वं व्याप्य स तिष्ठति।' सर्व्वजिष्णवे इति सर्व्वतः समुत्कृष्टाय इत्यर्थः। समुत्कर्षश्चास्य विशुद्धसत्त्वप्रधानतया प्रकृष्टज्ञानक्रियाशक्तियुक्तत्वादिति भावः। तस्मै तादृशाय महत्तत्त्वाख्यविष्णवे नमः। विष्णुरिति हि महत्तत्त्वस्य नामान्तरमेवेति विज्ञाः। तदुक्तमनुगीतायाम्—'महानात्मा मतिर्विष्णुर्जिष्णुः शम्भुश्च वीर्य्यवान्। बुद्धिः प्रज्ञोपलब्धिश्च तथा ब्रह्मा धृतिः स्मृतिः। पर्य्यायवाचकैरेतैर्महानात्मा निगद्यते' इति। एतेन एकस्य महत्तत्त्वस्यैव एकैकगुणप्राधान्येन ब्रह्मविष्णुशम्भुरूपत्वमिति व्यक्तं भवति। तथाहि—रजसः प्रवृत्तिस्वभावतया रजःप्रधानं महत्तत्त्वं ब्रह्मेति, तमसो मलिनात्मकतया तमःप्रधानं महत्तत्त्वं संहारकः शम्भुरिति सत्त्वस्य स्वच्छात्मकत्वेन सत्त्वप्रधानं महत्तत्त्वं पालनक्रियापरो विष्णुरिति उपपद्यते। तदुक्तं स्वयमेव 'सात्त्विको राजसश्चैव तामसश्च त्रिधा महानि'ति विष्णुप्रामाण्येन 'अत एवाद्यशब्देन महतो देवतात्रयोपाधित्वात् तदविवेकेन ब्रह्मविष्णुशिवत्ववचनम्' इति। एतत्सम्बन्धिविशेषविवरणानि अस्यैव ग्रन्थस्य पूर्व्वभागीयतृतीयपरिच्छेदे महत्तत्त्वनिरूपणप्रकरणे अनुसन्धेयानि। महतो विष्णुरूपत्वं स्वयम्भूत्वम् ईश्वरत्वञ्च तत्रैव स्पष्टतया लब्धव्यम्। जगदङ्कुर इतिपदेन प्रथमत एव प्राधान्येन जगतः सृष्टिव्याख्यानात् कापिलं साङ्ख्यं सृष्टितत्त्वप्रधान-

सांख्यकारिकया लेशादात्मतत्त्वं विवेचितम्।
सांख्यसारविवेकोऽतो विज्ञानेन प्रपञ्च्यते॥ २

मित्यायाति। अत एव सृष्टिमधिकृत्य तत्र विशेषविवरणं मोक्षमधिकृत्य स्वल्पविवरणञ्च नासङ्गतं प्रतिभाति। मोक्षानुकूलविषयाणां सेश्वरसांख्यापराख्येन पातञ्जलदर्शनेनैव निःशेषतो निवेदनेन परिपूर्त्तिसम्पादनादिति। अत्र चोपक्रमसमानग्रन्थस्य चतुर्विंशति-तत्त्वप्रतिपादकतया विकारमुख्यं महत्तत्त्वमादौ उपदर्श्य ग्रन्थस्य विषयोऽपि निर्णीतो भवतीति ज्ञातव्यम्। तस्यैव च सारत्वान्न नाम्नोऽप्यपार्थकत्वम्।

(२) ननु भवता प्रक्रंस्यमानो निरर्थक एवायं सांख्यसारग्रन्थः श्रीमदीश्वरकृष्ण-प्रणीतया सांख्यकारिकयैव गतार्थत्वात्, अतः किमिति तन्निर्व्विघ्नपरिसमाप्त्याद्यर्थं मङ्गला-चरणमनुष्ठीयत इत्याशङ्कानपाकर्त्तुमात्मनो ग्रन्थस्य सांख्यकारिकया गतार्थत्वं प्रतिषेधति सांख्यकारिकयेत्यादिना। सांख्यकारिकया सांख्यकारिकाख्यग्रन्थेन ईश्वरकृष्णप्रणीते-नेत्यर्थः। लेशात् संक्षेपतः तदीयमंशविशेषमाश्रित्य इत्यर्थः। न तु साकल्येनेति आत्मतत्त्वं जीवात्मनः स्वरूपं विवेचितम्। तथाहि तत्र आत्मतत्त्वस्य साकल्येन अनुपदेशात् तदधिजिगमिषूणां न तत्र काम्यलाभ इति तदर्थमपेक्षितं ग्रन्थान्तरं, यत्र निःशेषमात्मतत्त्वमुपदिष्टमस्तीति भावः। अतः अस्मात् कारणात्, तत्र आत्मतत्त्वस्य लेशत एव विवेचनादित्यर्थः। विज्ञानेन विज्ञानभिक्षुणा मयेति शेषः। सांख्यस्य सांख्यशास्त्रस्य यः सारः स्थिरांशः परपक्षैरपाकर्त्तुमशक्य इति तात्पर्य्यम्। तस्य विवेकः विशेषतो ज्ञानं जिज्ञासूनामिति शेषः। प्रपञ्च्यते वितन्यते तदुपदेशकवाक्य-सन्दर्भैरिति शेषः। अत्र विज्ञानभिक्षुपदेनात्मन उपन्यासे आत्मन एव अपूर्णज्ञानत्व-प्रतिपत्त्या साकल्येन आत्मतत्त्वशिक्षादाने न जिज्ञासूनां विश्वासः स्यादिति ग्रन्थस्य-

---

১ অনু। যে মহত্তত্ত্ব স্বয়ং প্রকৃতি হইতে সমুৎপন্ন হইয়া জগদ্-বৃক্ষের অঙ্কুরস্বরূপ হইয়া থাকে। যে মহত্তত্ত্ব অণিমাদি ঐশ্বর্য্যযুক্ত। সর্ব্বাপেক্ষা উৎকৃষ্ট ব্যোমাদি পঞ্চ ভূতের উপাদান কারণ, ব্যাপক সেই মহত্তত্ত্বকে নমস্কার।

प्राय: सङ्कलिता सांख्यप्रक्रिया कारिकागणे ।
साऽताऽत्र वर्ण्यते लेशात् तदनुक्तांशमात्रतः ॥ २

पाभिधायकविज्ञानपदेनात्मन उपन्यासः कृतो ग्रन्थकर्त्रा इति निपुणाः। विशिष्टं ज्ञानं विज्ञानं तद्विद्यते यस्येति व्युत्पत्त्या विज्ञानशब्दादस्त्यर्थे कच् प्रत्ययेन विशिष्टज्ञान-शालिनीति निष्पन्नं तदर्थः। तच्चेदं विज्ञानं मोक्षविषयकमेव सांख्यादीनां मोक्षशास्त्रत्वेन प्रकृते मोक्षस्यैव प्रकृतत्वात्।

सांख्यसार इत्यस्य विशदार्थस्तु संख्या सम्यक्ख्यातिः सम्यग्ज्ञानमिति यावत्, तदुपदेशकं शास्त्रं सांख्यं तस्य सारः उत्कृष्टांशः। अथवा—'संख्यां प्रकुर्व्वते ये तु प्रकृतिञ्च प्रचक्षते। तत्त्वानि च चतुर्व्विंशत् तेन सांख्या इति स्मृताः' । इति प्रमाणेन ये सांख्यतया निरूक्ताः तत्सम्बन्धि सारः। तथाहि यत् प्रतिपादितं वस्तु सांख्यानां, तादृशानां सारतया अभिमतः ग्रन्थविशेषः। पूर्व्वकल्पे तु सारप्रति-पादकतया ग्रन्थस्यापि सारत्वमुपचर्य्यते इति। प्रपञ्चाते इत्यत्र भविष्यत्सामीप्ये लड् विधानात् प्रपञ्चाते इत्यस्य प्रपञ्चयिष्यते इति क्रियायाः भविष्यत्त्वलाभेन 'उत्तर-कालकर्त्तव्यत्वप्रकारकबोधानुकूलव्यापाररूपप्रतिज्ञालक्षणसमन्वयः। शास्त्रादौ अनु-बन्धचतुष्टयमित्थमत्र सङ्गमनीयम्। यथा कर्त्तव्यनित्यकृत्यादिविशुद्धान्तरात्मा अधिकारी, सांख्यशास्त्रस्य सारः प्रतिपाद्यः, तेन च ग्रन्थस्य प्रतिपाद्यप्रतिपादकभाव-लक्षणः सम्बन्धः, फलञ्च सत्त्वपुरुषान्यताख्यातिद्वारा अपवर्गः। तेन च तत्त्वज्ञानस्य कार्य्यकारणभावः सम्बन्धः।

(२) कारिकागणे कारिकासमूहे ईश्वरकृष्णोक्त इत्यर्थः। अथवा भाविनि भूत-वदुपचार इतिन्यायात् स्वयं क्रियमाणे कारिकात्मकोत्तरभागे इति तदर्थः. अन्यथा साङ्ख्यकारिकये'त्यादि स्ववचो विरुध्यतेत्यभियुक्ताः। परप्रणीतग्रन्थेन स्वग्रन्थस्य

২ অনু। ভগবান্ ঈশ্বরকৃষ্ণ সাংখ্যকারিকা দ্বারা সংক্ষিপ্তরূপে আত্মতত্ত্বের প্রতিপাদন করিয়াছেন। এইজন্য বিজ্ঞানভিক্ষু সাংখ্যশাস্ত্রীয় সারভাগ বিস্তৃতরূপে প্রতিপাদন করিতেছেন।

सांख्यभाष्ये प्रकृत्यादेः स्वरूपं विस्तरान्मया ।
प्रोक्तं तस्मात् तदप्यत्र सङ्क्षेपादेव वक्ष्यते ॥ ४

आत्मानात्मविवेकसाक्षात्कारात् कर्त्तृत्वाद्यखिलाभिमान-निवृत्त्या तत्कार्य्यरागद्वेषधर्माद्यनुत्पादात् पूर्वोत्पन्नकर्मणां

---

गतार्थतासूचनस्य पूर्व्वाचार्य्यविरुद्धत्वात् । प्रायः प्रायेण सांख्यस्य प्रक्रिया सांख्यशास्त्रोक्तसर्गादिप्रणाली । सङ्कलिता संगृहीता । अतः तदनुक्तांशमात्रतः तदनुपदिष्टभागमात्रेण सा सांख्यप्रक्रिया लेशात् लेशतः वर्ण्यते, तथाहि सांख्य-शास्त्रमधिकृत्य कारिकया यत् यत् परिशोधितम् तत्तद्वस्तुप्रतिपादनस्य निष्फलत्वात् तदनुक्ता एवांशाः समासेन वक्तव्या. लेशशब्दोपादानेन अनुक्तांशमात्रस्यापि प्राथिकत्व सूचनाद् इति भावः ।

(४) मया विज्ञानभिक्षुणा ग्रन्थकर्त्रा । सांख्यभाष्ये सांख्यप्रवचननामकभाष्य-ग्रन्थे प्रकृत्यादेः प्रकृतिप्रभृतेः स्वरूपं लक्षणं विस्तरात् वैशद्येन इत्यर्थः । प्रोक्तं तस्मात् तत्रैव वैशद्येन तत्कथनात् इत्यर्थः । तदपि संक्षेपादेव संक्षेपमाश्रित्यैव वक्ष्यते । विस्तरेणोक्तौ निरर्थकग्रन्थगौरवात् एकान्ततोऽनुक्तौ एतद्ग्रन्थमात्रमालोचयतां तद्विज्ञानस्य एकान्ततोऽसम्भवात् । एतत् श्लोकद्वयमपि प्रतिज्ञात्मकमवगन्तव्यम् ; उभयत्रैव निरूपणविशेषस्य कर्त्तव्यताविज्ञापनात् । तथाहि इमं सांख्यसारग्रन्थमालोचयतां संक्षेपेण विस्तरेण च सांख्यपदार्थविज्ञानं सम्पद्येत इति प्राप्तं भवति ।

---

৩ অনু। কারিকায় সাংখ্যশাস্ত্রীয় প্রক্রিয়া প্রায় সমস্তই সঙ্কলন করা হইয়াছে। এই গ্রন্থে কারিকার অনুক্ত অংশগুলি লইয়াই উক্ত সাংখ্য প্রক্রিয়া বর্ণিত হইবে।

৪ অনু। সাংখ্যপ্রবচন ভাষ্য গ্রন্থে আমি (বিজ্ঞানভিক্ষু) প্রকৃত্যাদির রূপ বিস্তৃতরূপে বলিয়াছি, সেই কারণে উক্ত বিষয়ও আমি সংক্ষেপেই বলিব।

चाऽविद्यारागादिसहकार्य्युच्छेदरूपदाहेन विपाकानारम्भकत्वात् आरब्धसमाप्त्यनन्तरं पुनर्जन्माभावेन त्रिविधदुःखात्यन्तनिवृत्तिरूपो मोक्षो भवतीति श्रुतिस्मृतिडिण्डिमः (५)।

---

(५) आत्मा अहन्त्वप्रकारकप्रमाविषयो जीवः स च नित्यशुद्धबुद्धमुक्तस्वभावः। अनात्मा तद्व्यतिरिक्तः प्रकृत्यादिजड़वर्गः। तयोर्विवेको भेदः तस्य साक्षात्कारात् यौगिकप्रत्यक्षरूपेण मानसप्रत्यक्षादित्यर्थः। तथाहि योगशक्त्या आत्मानुयोगिकप्रकृत्यादिजड़वर्गप्रतियोगिकं अहं प्रकृत्यादिभिन्न इत्याकारकं भेदज्ञानम् मोक्षकारणम्। यद्वि ज्ञानान्मुक्तिरिति सांख्यसिद्धान्ते ज्ञानपदं तदपि तादृशज्ञानाभिप्रायकमेव। तच्चेदं ज्ञानं न साक्षात् मुक्तिहेतुः, परं अवान्तरव्यापारान् कर्त्तृत्वाद्यभिमाननिवृत्तिप्रभृतिकान् द्वारीकृत्येत्याह कर्त्तृत्वेत्यादि। तथाहि आत्मनि अनात्मभेदोपलब्धिर्हि आत्मानात्मवैधर्म्यज्ञानात् तेनैव आत्मनि अकर्त्तृत्वादेः प्रत्ययात् तत्र कर्त्तृत्वाभिमानो विलयमुपगच्छति। न हि आत्मा अकर्त्ता इति ज्ञाने जाते सम्भवति आत्मनः कर्त्तृत्वबुद्धिः, उक्तज्ञानद्वयस्य विरोधित्वात्। ननु सत्यामपि तादृशाभिमाननिवृत्तौ यदि रागद्वेषधर्माधर्मादयः स्युः, तदा तत्कारणकसुखदुःखादीनामवश्यम्भावान्नहि सम्भवस्त्रिविधदुःखात्यन्तनिवृत्तिलक्षणाया मुक्तेरित्याह तत्कार्य्येति। तथाहि तादृशाभिमान एव मूलं रागद्वेषधर्माधर्मादीनां एवञ्च तन्निवृत्तौ तत्कार्य्यनिवृत्तेरवश्यम्भावान्न तद्दोषः। ननु मा नाम नूतनरागद्वेषधर्माधर्मादयः तदभिमाननिवृत्त्या उत्पद्यन्ताम पूर्व्वोत्पन्नानां धर्माधर्माणां फलानुत्पादः कथमित्याह पूर्व्वोत्पन्नकर्म्मणामित्यादि। तथाहि सञ्चितं प्रारब्धञ्चेति द्विविधं खलु कर्म्म, सञ्चितमेव हि पूर्व्वोत्पन्नमुच्यते, तस्य च फलजनने अविद्यारागादयः सहकारिणः, एवञ्च आत्मानात्मविवेकसाक्षात्कारात् तुच्छवित्तिवेद्यतया समुत्पद्यते यदा अनात्मनि आत्मभेदबुद्धिस्तत एव अनात्मनि आत्मभेदज्ञानरूपा निवर्त्तते अविद्या, अतः सहकारिभूताविद्याभावात् न सञ्चितस्य फलोन्मुखत्वम्। सहकारिणमन्तरेण केवलकारणस्य फलजनने सामर्थ्याभावादिति। अविद्यारूपमुक्तं पातञ्जले—"अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्ये"ति। विपाकेत्यादि—सति मूले तद्विपाको जात्यायुर्भोगा' इति पातञ्जलसूत्रोपदिष्टा जात्यायुर्भोगा विपाक-

तत्र श्रुतयः ;—"अथाऽकामयमानो योऽकामः निष्कामो न तस्य प्राणा उत्क्रामन्तीहैव समवलीयन्ते। (६)

---

शब्दार्थः। ते हि कर्म्मणा अविद्यासहकृतेन समुत्पद्यन्ते, न तु केवलेन। अतएव अविद्यारूपसहकार्य्यभावात् न विपाकारम्भ इति भावः। आरब्धेत्यादि। आरब्धं प्रारब्धं कर्म्म, तद्धि जन्महेतुः भोगमन्तरेण न चीयते, अतएव तत्त्वज्ञानोत्पत्तावपि सञ्चितस्येव न प्रारब्धस्य चयः परं भोगादेव, एतदभिप्रायेणैव शास्त्रकाराः 'नाभुक्तं चीयते कर्म्म कल्पकोटिशतैरपी'ति प्राहुः। यावच्च न भोगेन प्रारब्धस्य चयः, तावत् जन्महेतुना तेन अवश्यं जन्म, व्यतिक्रान्ते च प्रारब्धे हेत्वभावेन न जन्मेति तत्त्वम्।

त्रिविधेत्यादि। त्रिविधं दुःखं आध्यात्मिकमाधिभौतिकमाधिदैविकञ्च। मोक्ष-स्वरूपे तु न विशेषेण दुःखत्रयस्य निवेशः स्वसमानाधिकरणदुःखप्रागभावासमानकालीन-दुःखध्वंसस्यैव तत्स्वरूपत्वात्। त्रिविधदुःखविस्तरस्तु कौमुद्यादिषु द्रष्टव्यः। दुःखस्य क्षणिकत्वेन प्रतिनियतमेव युक्तितस्त्वे तत्क्षयस्य कारणत्रयात्मकस्य सम्भवात् दुःखध्वंस-मात्रस्य मुक्तित्वं संसारदशोत्पन्नदुःखध्वंसे अतिव्यापकमिति असमानकालीनान्तम्। तथा च संसारदशोत्पन्नदुःखध्वंसस्य भाविदुःखप्रागभावकालीनत्वात् नातिव्याप्तिः। सर्व्वदैव दुःखध्वंसे पुरुषान्तरीयदुःखप्रागभावकालीनत्वसत्त्वेन असम्भवनिवृत्तये दुःखांशे स्वसामा-नाधिकरण्यम्। तथाहि—पुरुषान्तरीयदुःखस्य स्वसामानाधिकरण्यविरहात् तत्प्रागभाव-कालीनत्वेऽपि न क्षतिः। सांख्यसूत्रेऽपि 'अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरु-षार्थ' इति। न्यायसूत्रेऽपि "तदत्यन्तविमोक्षोऽपवर्ग" इति लभ्यते। तत्र सर्व्वत्रैव ईदृश एवार्थः समुपादेयः। प्रकृतमते ध्वंसप्रागभावयोरसत्त्वमभ्युपगच्छतां पुनः—तदीयदुःखाविर्भावसमानकालीनभिन्नतदीयदुःखतिरोभाव एव स इति।

---

৫ অনু। আত্মা ও অনাত্মা অর্থাৎ চেতন ও অচেতন এই উভয়ের ভেদসাক্ষাৎকার হইতে আত্মাতে কর্তৃত্বাদি ধর্ম্মের অভিমান নিবৃত্ত হওয়ায় তাহার কার্য্য—রাগ, দ্বেষ ও ধর্ম্মাদির অনুৎপাদ হেতু পূর্ব্বোৎপন্ন কর্ম্মসমূহের অবিদ্যা রাগ প্রভৃতি সহকারীর উচ্ছেদরূপ দাহপ্রযুক্ত বিপাক অর্থাৎ জন্মাদি-হেতুত্ব না থাকায় প্রারব্ধ সমাপ্তির অবসানে পুনর্ব্বার জন্ম না হওয়ায় ত্রিবিধ দুঃখের অত্যন্ত নিবৃত্তিরূপ মোক্ষ হইয়া থাকে, ইহাই শ্রুতি স্মৃতি দ্বারা বিঘোষিত আছে।

आत्मानं चेद् विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ (७)

---

(६) ननु श्रुतिमूलमिदं सांख्यशास्त्रम्, तत्र का प्रमाणश्रुतिरित्याह तत्र श्रुतश्च इति । रागादिविरहे कर्म्माणि न फलमुपजनयन्तीति मोक्ष एवोपपद्यते, एतदर्थमाश्रित्य 'अथाकामयमान' इत्यादि बृहदारण्यकश्रुतिरिति । अथेति हेतुवचनमिदम् । यस्मात् कामना संसारकारणं तस्मादित्यर्थः । अकामयमानः कर्म्मफलविषयककामनाशून्यः । कुतः ? योऽकामः बाह्यशब्दविषयेषु आसङ्गशून्यः । तथात्वमपि कुतः ? इत्याह निष्काम इति । कामो वासना स निर्गतो यस्मात् सः तस्य तथाभूतस्य प्राणाः वागादयः न उत्क्रामन्ति देहात् ऊर्द्ध्वं न गच्छन्ति । इहैव समवलीयन्ते स्वाश्रयीभूतबुद्धिलयात् लयं गच्छन्तीत्यर्थः । एतेन रागाद्यभावेनैव नात्मनो देहात् देहान्तरप्राप्तिरिति. तद-भावे च मुक्तिरेवेति फलितम् ।

(७) आत्मविवेकज्ञानानन्तरं जीवस्य शरीरासम्बन्धमुपपादयितुं श्रुतिमुदाहरति आत्मानमित्यादिना । पुरुषः जीवः चेत् अयम् अस्मि अहं प्रकृत्यादिभिन्नः अस्मीति आत्मानं स्वात्मस्वरूपं विजानीयात् प्रकृत्यादिप्रतियोगिकभेदज्ञानवान् स्यात्, तदा किम् इष्टम् इच्छन् कस्य वस्तुनः कामाय लाभाय शरीरमनुसंज्वरेत् शरीरमाश्रित्य दुःखी भवेत् । तथाहि आत्मविज्ञानलाभस्यैव सकललाभावधितया तदतो नास्ति पुनर्लब्धव्यमिति दुःखहेतुभूतशरीरमनिष्टादेव तदा परिकल्प्य ततो निवृत्तिर्जीवानामिति भावः ।

---

৬ অনু। তদ্বিষয়ে শ্রুতি যথা,—'যে হেতু কামনাবান্ ব্যক্তিই সংসারী হয়, এইজন্য যাহার কামনা নাই সেই নিষ্কাম ব্যক্তির প্রাণ এই শরীরেই লীন হয়, আর অন্য দেহ আশ্রয় করে না।''

৭ অনু। (অপর শ্রুতির অর্থ যথা)—জীব যখন 'আমি প্রকৃত্যাদি হইতে ভিন্ন বস্তু' এইরূপে আত্মার সম্বন্ধে জ্ঞান লাভ করে, তখন কোন্ বস্তুর অভিলাষ করিয়া শরীর অবলম্বন করিবে।

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ ৮
कामान् यः कामयते मन्यमानः
स कर्म्मभिर्जायते तत्र तत्र।
पर्य्याप्तकामस्य कृतात्मनस्तु
इहैव सर्वे प्रविलीयन्ति कामाः" ॥ ৯ इत्याद्याः;

---

(৮) श्रुत्यन्तरमप्याह—यदेत्यादि। यदा यस्मिन् काले तत्त्वज्ञानोदयसमय इत्यर्थः। अस्य जीवस्य हृदि अन्तःकरणतत्त्वे बुद्धाविति यावत् ये कामाः कामनाविशेषाः स्थिताः ते सर्व्वे प्रमुच्यन्ते परित्यज्यन्ते। बुद्धिवृत्तिकामनासमूहस्य सर्व्वस्य परिहाणे इत्यर्थः। अथ तत्परिहाणानन्तरं मर्त्त्यः अमृतः मुक्तः भवति। मर्त्त्यः मरणधर्म्मापि अमृतः मृत्युरहितो भवति, अमृत्युपदं मोक्षपदं लभत इत्यर्थः। अत्र शरीरे ब्रह्म चित्स्वरूपावस्थितिलक्षणां मुक्तिमित्यर्थः। समश्नुते प्राप्नोति। तथाहि तत्त्वज्ञानोदये निष्कामो मुक्तिमुपलभत इत्यर्थः।

(৯) यः मन्यमानः प्राक्तनान् धर्म्मान् आत्मनि अध्यारोपयन् कामान् रूपादिविषयान् आत्मना असंपृक्तानपि स्वीयत्वेनाभिमतान् भोग्यानित्यर्थः। कामयते अभिलषति। सः जीवः कर्म्मभिः धर्म्माधर्म्मादिहेतुभिः तत्र तत्र, यत्र यत्र विषयप्राप्तिहेतोः पुरुषप्रवर्त्तकाः कामाः सम्भवन्ति तेषु स्थानेष्वित्यर्थः। जायते जन्मना सम्बध्यते। पर्य्याप्तकामस्य सम्पूर्णाभिलाषस्य विषयभोगात् परितृप्तिमापन्नस्य न तु भोगेन प्रवृद्धाभिलाषस्य इत्यर्थः। अथवा बहिर्विषयककामनाविरहेण केवलमात्मन्येव परितृप्तस्य इत्यर्थः। कृतात्मन इति कृतः विवेकेन बुद्धिविषयीकृतः आत्मा येन तथाभूतस्य प्रकृतेः

---

৮ অনু। যখন জীবের হৃদয়াশ্রিত সকল কামনা পরিত্যক্ত হইবে, তদনন্তর মর্ত্ত্য জীব মোক্ষলাভ করিবে। এই দেহেই ব্রহ্মজ্ঞান লাভ করিবে।

स्मृतयश्च कौर्माद्याः ; यथा कौर्मे—

"रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः।

कार्यो ह्यस्य भवेद् दोषः पुण्यापुण्यमिति श्रुतिः॥

तद्वशादेव सर्वेषां सर्व्वदेहसमुद्भवः।" इति। मोक्षधर्मे,—

"इन्द्रियाणीन्द्रियार्थाश्च नोपसर्पन्त्यतर्षुलम्।

हीनश्च करणैर्देही न देहं पुनरर्हति॥

तस्मात् तर्षात्मकाद् रागाद् बीजाज् जायन्ति जन्तवः।" इति (१०)।

---

विवेकेन परिगृहीतात्मस्वरूपस्य इत्यर्थः। इहैव अस्मिन्नेव शरीरे सति सर्वे कामाः त्रिसंख्याः कामनाः प्रविलीयन्ति क्षयमापद्यन्ते स्वजन्मकारणलयात् न ते पुनः सम्भवन्तीति भावः।

अत्र 'आत्मानात्मे'त्यादि 'निवर्त्त्ये'त्यन्त हेतुपरा प्रथमा श्रुतिः, द्वितीया 'पुनर्जन्म-भागेने'त्यन्तहेतुपरा, तृतीया—"त्रिविधदुःखात्यन्तनिवृत्तिरूपो मोक्षो भवती"ति फल-प्रतिपादकवचनपरा। चतुर्थी तु तादृशात्मतत्त्वाभिज्ञस्य प्रशंसापरा तदितरस्य निन्दापरा इति श्रुतिचतुष्टयचातुर्य्यम्।

(१०) इत्याद्या इति पूर्व्वोक्तस्य श्रुतय इत्यस्य विशेषणम्। स्मृतयश्चेति— तथाहि श्रुतिस्मृतिप्रामाण्येन पूर्व्वनिरुक्तं सिद्धमिति भावः।

रागद्वेषादय इति—इदं रागद्वेषादीनां मिथ्याज्ञानजन्यत्वे जन्मादिकारणत्वे च मानम्। भ्रान्तिनिबन्धना इति—भ्रान्तिः भ्रमज्ञानम मिथ्याज्ञानमित्यर्थः निबन्धनं

---

৯ অনু। যে অভিমানী ব্যক্তি বিষয়ভোগ কামনা করে, সেই ব্যক্তি কর্ম্মানুসারে সেই সেই বিষয়ের স্থানে জন্মগ্রহণ করে। যে ব্যক্তি কামনার সমাপ্তি লাভ করিয়াছে, সেই কৃতাত্মা পুরুষের সকল কাম এই দেহেই লীন হইয়া থাকে। ইত্যাদি

ननु रागाभावेऽपि केवलकर्मवशान्नरकादिप्राप्तेः कथं रागस्य कर्मसहकारित्वं विपाकारम्भ उपपन्नम्। नरकादौ

---

कारणं येषां तथाभूताः। अस्येति—रागद्वेषादिरूपस्य दोषस्य इत्यर्थः। अत्र अस्येति एकत्वस्य अविवक्षया नासङ्गतिः। तथाहि मिथ्याज्ञानात् रागादयः रागादिभ्यश्च धर्म्माधर्म्मौ इति। अत एव न्यायसूत्रेऽपि 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इत्यत्र यथोत्तरं कार्य्यकारणभावाभिप्रायमूलकः सन्निवेशः कृतो गौतमेन। तद्वशादिति पुण्यापुण्यवशादित्यर्थः। इदमत्रावधेयं यथा—यदा नाम समुत्पन्नेन तत्त्वज्ञानेन रागादिदोषाः क्षीणाः, पूर्व्वस्थितञ्च विनष्टमदृष्टं, तदा कारणाभावात् अनुत्पत्त्या द्वितीयादृष्टस्य पुनः अदृष्टकारणकशरीरसम्बन्धाभावात् जीवन्मुक्तस्य तद्देहावसाने विदेहमुक्तिरेवेति।

अतर्पुलमिति—निराकाङ्क्षं विषयविषयकरागादिशून्यमित्यर्थः। इन्द्रियाणि चक्षुरादीनि नोपसर्पन्ति। तथाहि—यावद्धि चक्षुरादीनां विषयेषु जीवो रागादिमान् भवति, तावदेव तस्य तद्विषये प्रवृत्त्या इन्द्रियप्रेरणा सम्भवति, नतन्यदा। अथवा अतर्पुलं विषयवासनाशून्यम् इन्द्रियाणि नोपसर्पन्ति न लभन्ते तदीये शरीरे नेन्द्रियसम्बन्धः सम्भवतीत्यर्थः। अतएव 'हीनश्च' इत्यादि वक्ष्यमाणं सङ्गच्छते इति। करणैः इन्द्रियैः हीनः रहितः सन् देही पुनः देहं न अर्हति। न पुनर्जायते इत्यर्थः। आत्मनः शरीरेन्द्रियसम्बन्धविशेषस्यैव जन्मत्वात् इन्द्रियसम्बन्धाभावेन जन्माभावस्य उपपत्तेः। तस्मादिति सति रागादौ जन्मसम्भवात् असति च जन्मासम्भवात् अन्वयव्यतिरेकाभ्यामित्यर्थः। तर्षात्मकात् इच्छाविशेषरूपात् रागात् बीजात् कारणात् जन्तवः प्राणिनः जायन्ति जायन्ते जन्म परिग्रह्णन्ति। रागो देहसम्बन्धहेतुरिति भावः।

---

১০ অনু। কৌর্ম্মাদি স্মৃতিও এতদ্বিষয়ে প্রমাণ রহিয়াছে। কৌর্ম্মে প্রমাণ যথা। রাগদ্বেষাদি সকল দোষই ভ্রান্তি অর্থাৎ মিথ্যাজ্ঞানরূপ অভিমান-মূলক। পুণ্য ও পাপ ইহা উক্ত দোষের কার্য্য ইহাই শ্রুতিতে উক্ত আছে। উক্ত পুণ্য ও পাপের প্রভাবেই সকলের সর্ব্বপ্রকার দেহের উদ্ভব হয়।

विशेषतो रागाभावेऽपि सामान्यतो रागसत्त्वात्। निषिद्ध स्त्र्यादिगामिनां स्त्र्यादिरागादेव तप्तलौहमयनारीसमालिङ्गनादिरूपनरकोत्पत्तेः (११)।

---

(११) कर्म्मणो जन्महेतुत्वं 'अविद्यारागादिसहकार्य्युच्छेदरूपदाहेने'त्यादिना प्रागुक्तसन्दर्भेण रागस्य सहकारित्वमनुप्राप्तम्। एवञ्च नारकजात्यादावपि रागस्य हेतुताभावात् कथं सङ्गतिरित्याशङ्कते नन्वित्यादिना। कर्म्मवशादिति रागादिविरहसहकृतादृष्टवशादित्यर्थः। नरकादिप्राप्तिरिति—सुखानवच्छेदकशरीरावच्छिन्नदुःखरूपनरकलाभादित्यर्थः। कथमित्यादिः—तथाहि स्वीयदुःखस्य स्वीयदुःखसाधनस्य वा केनापि अनिष्यमाणतया नरकादौ तादृशदुःखरूपे तादृशदुःखाश्रयस्थानविशेषरूपे वा नरकपदार्थे कथमपि कस्यापि रागाभावेन निरुक्तप्रश्नार्थः सङ्गच्छते। विपाकारम्भ इति—विपाको जात्यायुर्भोगाः कर्म्मफलमिति यावत्। तथाहि नरकादिविषये कस्यापि कामनाविरहेण नरकस्य अनिष्यमाणत्वात् रागाभावेन नरकादिप्राप्तिरन्याय्या इति भावः।

विशेषत इति—तादृशदुःखादिरूपं नरकं भवतु इत्येवं रागस्य असम्भवात् अपि सामान्यतः साधारणरूपेण रागसत्त्वात्। तथाहि सामान्यरूपेण रागसत्त्वादेव न रागरूपकारणविरहेण कार्य्योत्पत्तिव्याघात इति भावः। निषिद्धेत्यादिः—निषिद्धस्त्रियः परदारादयः तद्गामिनां स्त्रीसङ्गरागादेव उक्तस्त्रीविषयकरागसत्त्वादित्यादि। तथाहि सामान्यतो रागमात्रमेव विपाकारम्भे कर्म्मणां सहकारि, न तु विशेषराग एव इति; प्रकृतेऽपि नारकजात्यायुर्भोगरूपविपाकारम्भककर्म्मणः निषिद्धपरदारादिविषयकरागप्रभवतया सामान्यतो रागस्य कर्म्मसहकारित्वं सिद्धमेवेति भावः। एतञ्च नरको मे भवत्विति.

---

মোক্ষধর্ম্মেও কথিত আছে যে,—ইন্দ্রিয় ও ইন্দ্রিয়ার্থগুলি কামশূন্য ব্যক্তিকে প্রাপ্ত হয় না। দেহী এইরূপে ইন্দ্রিয়বিহীন হইয়া আর দেহলাভ করে না। অতএব কামনাখ্য রাগরূপ বীজ হইতেই জীবসমূহ জন্মগ্রহণ করে।

যদ্যপ্যবিদ্যাস্মিতারাগদ্বেষভয়াখ্যক্লেশপঞ্চকমেব জন্মাদি-বিপাকারম্ভে কর্ম্মণাং সহকারি ভবতি। (১২)

"তদেব সক্তঃ সহ কর্ম্মণৈতি
লিঙ্গং মনো যত্র নিষিক্তমস্য।"

---

মুখ্যতয়া রাগাভাবেऽপি নরকসাধনপরস্ত্র্যাদৌ রাগসত্ত্বেন গৌণভাবেন রাগোऽস্ত্যেবেতি নির্গলিতোর্থঃ। নম্বিত্যাদিঃ—যদ্যপি সুখানবচ্ছেদকগ্ণীরাবচ্ছিন্নদুঃখমেব নরক-পদবাচ্যং, তথাপি কার্য্যকারণয়োরভেদোপচারেণ তাদৃগদুঃখকারণী তপ্তলৌহময়নারী-সমালিঙ্গনাদৌ নরকত্বোক্তিরিতি বিরুধ্যত ইতি ভাবঃ।

(১২) সত্যপি ক্লেশপঞ্চকস্যৈব জন্মাদিহেতুত্বপ্রতিপাদকপ্রমাণে রাগস্যৈব সুখ্যতয়া জন্মাদিহেতুতাং প্রতিপাদ্য স্বোক্তিং দৃঢ়য়তি যদ্যপীত্যাদিনা। ভয়াখ্যমিত্যত্র ভয়মভি-নিবেশাপরপর্য্যায়ম্। তদুক্তং পাতঞ্জলে—"অবিদ্যাস্মিতারাগদ্বেষাভিনিবেশাঃ পঞ্চ ক্লেশাঃ" ইতি। ক্লেশপঞ্চকমেবেতি—তদুক্তং 'সতি মূলে তদ্বিপাকো জাত্যায়ুর্ভোগা' ইতি। তথাহি ক্লেশস্য মূলত্ববচনাৎ ক্লেশপঞ্চকমেব জন্মাদিবিপাকারম্ভে হেতুরিত্যায়াতি।

---

১১ অনু। রাগ না থাকিলেও কেবল কর্ম্মবশতই নরকাদি-প্রাপ্তি হয় বলিয়া জন্মাদি বিষয়ের উৎপত্তি বিষয়ে বিশেষরূপে কামনা না থাকিলেও সামান্যরূপে রাগ রহিয়াছে, এইজন্য উক্ত স্থলেও রাগ কর্ম্মের সহকারিরূপে বর্ত্তমান। অতএব সামান্যতঃ রাগকে কর্ম্মের সহকারী বলিতে বাধা নাই। কারণ যাহারা শাস্ত্রনিষিদ্ধ পরদারাদি গমন করে, তাহাদের স্ত্রীপ্রভৃতি বিষয়ক রাগ হইতেই তপ্ত লৌহময় নারীসমালিঙ্গনাদিরূপ নরকের উৎপত্তি হয়।

১২—১৩ অনু। যদিও অবিদ্যা অস্মিতা রাগ দ্বেষ ও অভিনিবেশ অর্থাৎ ভয় এই পঞ্চ ক্লেশই জন্মাদিরূপ বিপাকসমুৎপাদনে কর্ম্মের সহকারী হইয়া থাকে। কারণ 'কামী ব্যক্তির মনঃপ্রধান লিঙ্গশরীর যে বিষয়ে আসক্তিমান্ হয়, সেই বিষয়ই কর্ম্মানুসারে লাভ করে' এতদর্থক

इति श्रुतावभिमानरागद्वेषादिजन्यस्य विषयवासनाख्य-सङ्गसामान्यस्यैव जन्मादिविपाकारम्भे कर्म्मसहकारित्वसिद्धेः।

"यत्र यत्र मनो देही धारयेत् सकलं धिया।
स्नेहाद् द्वेषाद् भयाद् वाऽपि याति तत्तत्स्वरूपताम्॥"

इत्यादिस्मृतेश्च। तथा च 'क्लेशमूलः कर्माशयः'। 'सति मूले तद्विपाको जात्यायुर्भोगा' इति योगसूत्राभ्यामप्यदृष्टे तद्विपाकारम्भे च क्लेशानां हेतुत्ववचनाच्च। तथाऽप्यविद्या-स्मितासत्त्वे रागस्याऽवश्यकत्वाद् द्वेषभययोश्च रागमूलकत्वाद् राग एव मुख्यतो जन्मादिहेतुतया यथोक्तवाक्यनिर्दिश्यत इति (१३)।

(१३) तत्रैव प्रमाणमुपन्यस्यति—तदैवेत्यादि। अस्य संसारिणः लिङ्गं मनः मनःप्रधानं लिङ्गशरीरं लिङ्गशरीरस्थं मनो वा यत्र यस्मिन् विषये निषिक्तं निश्चयेन संसक्तम्, तदेव फलीभूतं तादृशमेव वस्त्वित्यर्थः। सहकर्म्मणा एति प्राप्नोति। सह इति पृथक्पदं वा। स जीवः कर्म्मणा फलासक्तः सन् यत् कर्म्म कृतवान् तेन कर्म्म-णैव इत्यर्थः। एतेन कामापरपर्य्यायरागादिजन्यवासनाया जन्मादिहेतुत्वमिति व्यवस्थितं भवति।

শ্রুতিতে অভিমান, রাগ ও দ্বেষাদি জন্য বিষয়বাসনাখ্য সঙ্গসামান্যেরই জন্মাদিবিপাকারম্ভে কর্ম্মসহকারিত্ব সিদ্ধ আছে।

এবং ঐরূপ স্মৃতিও দেখা যায় যে—'দেহী যে যে বিষয়ে স্নেহ, দ্বেষ বা ভয় হেতু সম্পূর্ণ চিত্ত নিবিষ্ট করে, সেই সেই স্বরূপতা প্রাপ্ত হয়'। পাতঞ্জলদর্শনেও উক্ত আছে যে, কর্ম্মবাসনা ক্লেশমূলক। উক্ত মূল সত্ত্বে জন্ম, আয়ু ও ভোগরূপ তদীয় বিপাক উৎপন্ন হয়। উক্ত দুইটী সূত্র

ननु—"क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे।"

इत्यादिश्रुतेर्ज्ञानस्य प्राचीनकर्म्मनाशकत्वमेवोचितं दाहकत्वं कथमिष्यत इति चेत् न,

ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः।

---

तथापीति—क्लेशपञ्चकस्य हेतुत्ववचने सत्यपीत्यर्थः। रागस्य आवश्यकत्वादिति—अविद्यास्मितारूपक्लेशद्वयसत्त्वे तत्कार्य्यस्य रागस्य अवश्यम्भावादित्यर्थः। नहि अविद्या अस्मिता च रागमनुत्पाद्य अदृष्टोत्पादने समर्थे. नाप्यदृष्टं विना सम्भवो जन्मादेरिति रागस्य मुख्यत्वेनावश्यकत्वञ्चेति भावः।

(१४) ननु अविद्यारागादिसहकार्य्युच्छेदरूपदाहेनेत्यनेन ज्ञानस्य दाहकत्वमुक्तं श्रुत्यन्तरेण च कर्म्मणो नाशः प्रतिपाद्यत इति कथं सामञ्जस्यमिति चेत् नाशादिबोधकवाक्यस्य दाहपरत्वादित्याह नन्वित्यादिना। परावरे परमात्मनि दृष्टे साक्षात्कृते सति अस्य दृष्टात्मतत्त्वस्य कर्म्माणि पुण्यापुण्यरूपाणि क्षीयन्ते नश्यन्ति। यद्यपि 'नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपी'ति प्रमाणेन भोगमन्तरेण कर्म्मणो नाशो नोपपद्यते, तथापि 'नाभुक्त'मित्यादिस्मृतौ ज्ञानाद्यनाश्यकर्म्मण एव कर्म्मपदेन प्रतिपादनात् नासङ्गतिरिति भावः। अन्यथा कृतप्रायश्चित्तस्यापि कर्म्मफलभोगस्य अवश्यम्भावे प्रायश्चित्तस्य वैयर्थ्यात्। अतएव तत्र भोगमन्तरेणैव प्रायश्चित्तेन यथा कर्म्मनाशोपपत्तये 'नाभुक्त'मित्यादौ कर्म्मपदस्य प्रायश्चित्तानाश्यकर्म्मपरत्वं व्याख्येयं तथैव 'क्षीयन्ते' इत्यादि श्रुतिबलात् ज्ञानानाश्यकर्म्मपरत्वमपीति ध्येयम्। परे तु प्रारब्धं सञ्चितञ्चेति द्विविधमेव कर्म्म. तत्र प्रारब्धं भुक्तमेव क्षीयत इति भोगस्यैव तन्नाशकता, सञ्चितन्तु भोगादेव क्षीयत इति न नियमः अतएव 'नाभुक्तं क्षीयते कर्म्म' इत्यस्य प्रारब्धकर्म्म-

---

দ্বারাও অদৃষ্ট এবং তদীয় বিপাকারম্ভে ক্লেশের হেতুত্ব কথিত হইয়াছে। তথাপি অবিদ্যা ও অস্মিতা সত্ত্বে রাগের অবশ্যম্ভাবিতাবশতঃ এবং দ্বেষ ও ভয় রাগমূলক বলিয়া রাগকেই মুখ্যরূপে জন্মাদির হেতুরূপে যথোক্ত বাক্যসমূহ দ্বারা নির্দ্দিষ্ট করা হইয়াছে।

इत्यादिवाक्यैर्दाहस्याऽपि श्रवणेन लाघवात् दाहपरत्वस्यैव नाशादिवाक्येष्वपि कल्पनौचित्यात्। कर्म्मणां दाहश्च क्लेशाख्य-सहकार्य्युच्छेदेन नैष्फल्यम्। कर्म्मणां नाशस्तु प्रारब्धभोगान्ते चित्तनाशादेव भविष्यति। अतो लोकसिद्धेनाऽविद्यानाशेनैव द्वारेण कर्म्मफलानुत्पत्तिसम्भवात् न ज्ञानस्य कर्म्मनाशकत्वं गौरवादित्यादिकं योगवार्त्तिके प्रपञ्चितमस्माभिरिति दिक्।

---

परतया नानुपपत्तिगन्धोऽपीति प्राहुः। दाहपरत्वस्यैवेति—तथाहि दाहो नाम वस्तुनः शक्तिप्रतिबन्धेन फलजननासामर्थ्यसम्पादनम् बीजस्येव दग्धस्याङ्कुरजननासामर्थ्यजननम्। एवशब्देन इतरस्य नाशपरत्वस्य व्यावर्त्तनात् नाशादिबोधकवाक्यानामपि दाहपरत्वमेव युक्तमिति भावः। नाशादिवाक्येष्वपि इत्यपिशब्दः दाहप्रतिपादकवाक्यसमुच्चायकः।

ननु दाहो नाम तेजःसंयोगलक्षणः। स च कर्म्मणां नोपपद्यते तेषां निर्गुणत्वात् अतो दाहपदस्य प्रकृते अर्थान्तरं व्यनक्ति कर्म्मणामित्यादिना। नैष्फल्यमिति फलानुपधायकत्वम्। तथाहि यस्य यः फलजनने सहकारी तस्य तदभावप्रयुक्तफलानुपधायकत्वात् क्लेशाख्यसहकारिसमुच्छेदेन कर्म्मणां तथात्वमिति भावः।

उक्तञ्च स्मृतौ—'बीजान्यग्न्युपदग्धा न न रोहन्ति यथा पुनः। ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः"। इति।

---

১৪ অনু। এখন আপত্তির বিষয় এই যে, শ্রুতিতে দেখা যায় যে "পরাবর অর্থাৎ পরমপুরুষ আত্মা সাক্ষাৎকৃত হইলে জীবের কর্ম্ম অর্থাৎ পুণ্যাপুণ্য লয় প্রাপ্ত হয়।' ইহা দ্বারা তত্ত্বজ্ঞান কর্ম্মের নাশক ইহাই প্রতিপাদিত হওয়া উচিত; তবে জ্ঞানকে কর্ম্মের দাহক কিরূপে স্বীকার করা যায়? তাহার উত্তর এই যে, 'জ্ঞানাগ্নি' ইত্যাদি বাক্য দ্বারা দাহেরও প্রতিপাদন পাওয়া যায় বলিয়া, লাঘবতঃ নাশবোধক বাক্যেও দাহপরত্বই কল্পনা করা উচিত। এইজন্যই জ্ঞানকে কর্ম্মের দাহক বলা

तस्माद्‌ विवेक-साक्षात्कारादविद्यास्मितारागादि-क्लेशनिवृत्तौ त्रिविधदुःखात्यन्तनिवृत्तिरूपपरमपुरुषार्थः सिध्यतीत्युपपन्नम्। तथा च योगसूत्रद्वयम्। 'हेयं दुःखमनागतम्' 'विवेकख्यातिरविप्लवा हानोपाय' इति (१४)।

इति श्रीविज्ञानभिक्षुविरचिते सांख्यसारेऽ-
ध्यर्चितत्वादादौ विवेकख्यातिफलस्य
परमपुरुषार्थस्य परिच्छेदः॥ १

---

ननु विवेकज्ञानेन कर्म्मणां क्लेशाख्यसहकारिसमुच्छेदरूपदाहस्वीकारे तेषु पुनः कदाचित् फलोन्मुखता स्यात् दग्धबीजस्येव कदाचित् योगिसङ्कल्पादिना, इत्याशङ्कायामाह कर्म्मणां नाशस्त्वित्यादि। तथाहि आश्रयनाशेन आश्रयिणो नाशसम्भवात् आश्रयस्य चित्तस्य नाशादेव आश्रयिणां कर्म्मणां नाशोऽवश्यम्भावीति न परतोऽपि तेषां फलोन्मुखताप्रसङ्ग इति भावः।

---

হইয়াছে। ক্লেশাখ্য সহকারীর উচ্ছেদসাধনপূর্ব্বক কর্ম্মের নিষ্ফলতা সম্পাদনকেই কর্ম্মের দাহ বলা হয়। কর্ম্মের নাশ কিন্তু প্রারব্ধ কর্ম্মের ভোগাবসানে চিত্তনাশ হইতেই সম্পন্ন হইবে। অতএব লোকপ্রসিদ্ধ অবিদ্যানাশ দ্বারাই কর্ম্মফলের অনুৎপত্তি সুসম্ভব হওয়ায় কর্ম্মনাশকত্ব গৌরব বশতই স্বীকার করা যায় না, ইহা যোগবার্ত্তিক গ্রন্থে আমি (বিজ্ঞানভিক্ষু) বিস্তৃতরূপে প্রতিপাদন করিয়াছি। এখন আলোচনা করিলে দেখা যায় যে বিবেকসাক্ষাৎকার হইতে অবিদ্যা অস্মিতা ও রাগাদ ক্লেশের নিবৃত্তি হইলে, ত্রিবিধ দুঃখের অত্যন্ত নিবৃত্তিরূপ পরম-পুরুষার্থ সিদ্ধ হয়। দুইটী যোগসূত্র দ্বারাও ইহাই প্রতিপন্ন হয় যে 'অনাগত দুঃখ হেয়' 'বিশুদ্ধ বিবেকখ্যাতিই উক্ত দুঃখের হানোপায়'। ইতি।

শ্রীবিজ্ঞানভিক্ষুবিরচিত সাংখ্যসার গ্রন্থের প্রথম পরিচ্ছেদ সমাপ্ত। ১

# अथ द्वितीयः परिच्छेदः ।

अथात्मानात्मविवेकज्ञानस्य किं स्वरूपं तदुच्यते । (१) आत्मा तावत् सुखदुःखाद्यनुभवितेति सामान्यतो लोकप्रसिद्धिः । अनात्मा च प्रकृत्यादिर्जड़वर्गः । तयोरन्योन्यवैधर्म्येण परिणामित्वापरिणामित्वादिरूपेण दोषगुणात्मकेन हेयोपादेयतया पृथक्त्वेन ज्ञानं विवेकज्ञानम् । तथा च श्रुतिः—'स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते, अशीर्य्यो नहि शीर्य्यतेऽसितो न व्यथते न रिष्यतीत्यादि (२) । स्मृतिश्च—

---

(१) अथेत्यादि—अत्र आनन्तर्य्यार्थकाथशब्दः सङ्गतिप्रदर्शनाय, असङ्गतस्य अयोगानर्हत्वादिति । उच्यते इति च प्रतिज्ञाप्रदर्शनार्थम् । भविष्यत्सामीप्ये वर्त्तमाननिर्द्देशेन उच्यत इत्यस्य वक्ष्यत इत्यर्थपरत्वात् आत्मानात्मविवेकज्ञानस्वरूपनिरूपणे उत्तरकालकर्त्तव्यतालाभेन तथात्वोपपत्तेः । सङ्गतिश्च कारणत्वरूपा उपोद्घातरूपेति केचित् । निपुणास्तु पूर्व्वनिरूपितमोक्षं प्रति आत्मानात्मविवेकज्ञानस्य कारणतायाः श्रुत्यादिसिद्धतया कारणत्वरूपा सङ्गतिरेव वक्तुं युक्तेति वदन्ति । वस्तुतः सङ्गतिद्वयलक्षणसम्भवे सङ्गतिद्वयस्यापि प्राचीनैरङ्गीकारात् अत्रापि सङ्गतिद्वयमेवाङ्गीकर्त्तव्यमिति समासः ।

(२) लोकप्रसिद्धिरिति—श्रुतिप्रमाणका हि सांख्यादय आत्मानं निर्गुणं वदन्तीति शास्त्रीयगतिमनुरुध्य आत्मनो न सुखदुःखानुभवितृत्वं सम्भवति, तृचः कर्त्तरि सामर्थ्येन ज्ञानाद्यर्थकधातुयोगे आश्रयत्वस्यैव तत्कर्त्तृत्वरूपत्वात् सुखदुःखानुभवितृपदस्य सुखदुःखविषयकानुभवाश्रयत्वप्रतिपादकत्वेन ज्ञानाद्याश्रये महत्तत्त्व एव तथात्वस्य

---

১ অনু। অনন্তর আত্মা ও অনাত্মা অর্থাৎ জড় ও চেতন পদার্থের পরস্পর বিবেকজ্ঞানের স্বরূপ কি তাহাই উক্ত হইতেছে।

সোऽথ প্রতিনিবৃত্তাক্ষো গুরুদর্পণবোধিত: ।
স্বতোऽন্যাং বিক্রিয়াং মৌঢ্যাদাত্মিতামন্বসৈক্ষত ॥

---

সুপপাদত্বাদিতি লোকপ্রসিদ্ধিমাশ্রিত্য আত্মনস্তথাত্বমুক্তম্ । পরিণামিত্বেত্যাদি—পরিণামিত্বং প্রকৃত্যাদে: অপরিণামিত্বঞ্চ আত্মন: । অত উভয়ো: পরস্পরং বিরুদ্ধ-ধর্ম্মকতয়া ভেদেন জ্ঞানমেব যথার্থজ্ঞানম্ । দোষগুণাত্মকেনেতি—ইদং হেয়োপাদেয়-তয়োর্হেতুপ্রদর্শনায় । তৃতীয়াবিভক্তেস্তু হেত্বর্থগর্ভত্বাৎ । দোষা হেয়া: গুণাশ্চোপাদেয়া ইতি সাধারণোऽয়ং লৌকিকো নিয়ম: । দোষত্বমপকর্ষপ্রয়োজকত্বং গুণত্বঞ্চ উৎকর্ষ-প্রয়োজকত্বমিতি মন্তব্যম্ ।

পৃথকত্বেন জ্ঞানমিতি—অয় বিবেকজ্ঞানশব্দার্থ: । বিবেকশব্দস্য পৃথকত্বার্থক-ত্বাৎ । স এষ ইত্যাদি—স: প্রসিদ্ধ: আত্মা নেতি নেতি ন প্রকৃতি: ন মহান্ নাহঙ্কার ইত্যাদিরূপেণ তত্ত্বজ্ঞৈরনুভূয়মান: অগৃহ্য: সাধারণেন্দ্রিয়াগোচর: অত এব নহি গৃহ্যতে নেন্দ্রিয়জন্যজ্ঞানবিষয়ো ভবতি । অশীর্য্য: শীর্ণতারহিত: অত এব নহি শীর্য্যতে, নহি শীর্ণতালক্ষণং বিকারং লভতে । অসঙ্গ: সঙ্গরহিত: অত এব নহি সজ্যতে, কেনাপি সাংসারিকধর্ম্মেণ সংসৃষ্টো ন ভবতি । অসিত: খণ্ডীকর্তুমশক্য: অত এব নহি ব্যথতে, ব্যথালক্ষণং দু:খং ন লভতে । ন রিষ্যতি ন হিংসাবিষয়তামাপদ্যতে । তথাহি নির্গুণ-ত্বাদিগুণকে আত্মনি অপরিণামিত্বাদিধর্ম্মা: শ্রুতিপ্রতিপাদ্যা ইতি ভাব: ।

---

২ অনু । আত্মা সুখ ও দুঃখের অনুভবকারী ইহাই সামান্যতঃ লৌকিক প্রসিদ্ধি আছে এবং অনাত্মা অর্থ প্রকৃত্যাদি জড়বর্গ । এতদুভয়ের পরস্পর বৈধর্ম্ম্য, পরিণামিত্ব ও অপরিণামিত্বাদিরূপ দোষ-গুণাত্মকতা হেতু হেয় ও উপাদেয়রূপে পৃথক্ বলিয়া জ্ঞানই বিবেকজ্ঞান ।

শ্রুতিও ইহাই প্রতিপাদন করেন যথা—'এই প্রসিদ্ধ আত্মা 'নেতি নেতি' করিয়া নিষেধমুখে গৃহীত হন, অন্যরূপে ইহার গ্রহণযোগ্যতা নাই, কাজেই আমরা অন্যরূপে গ্রহণ করিতে পারি না । ইনি অক্ষয়, কাজেই

অথাঽসৌ প্রকৃতির্নাহমিয়ং হি কলুষাত্মিকা।
শুদ্ধবুদ্ধস্বভাবোঽহমিতি ত্যজতি তাং বিদন্॥
এবং দেহেন্দ্রিয়াদিভ্যঃ শুদ্ধত্বেনাঽত্মনি স্মৃতং।
নিখিলা সবিকারেয়ং ত্যক্তপ্রায়াঽপিচসংবৎ॥ ২ ইতি

---

(২) বিক্রিয়ায়া ন পুরুষধর্ম্মত্বং কিন্তু প্রাকৃতত্বমেব ইত্যত্র স্মৃতিমুদাহরতি—সোঽথ, ইত্যাদিনা। অথ অনন্তরং গুরুচরণশরণানন্তরমিত্যর্থঃ। প্রতিনিবৃত্তাক্ষঃ—প্রত্যাহৃতেন্দ্রিয়বর্গঃ গুরুদর্পণবোধিতঃ দর্পণবৎ গৃহীতসঙ্কল্পবস্তুতত্ত্বপ্রতিবিম্বেন গুরুণা বোধিতঃ বিজ্ঞাপিতঃ যাথার্থবস্তুতত্ত্ব ইতি যাবৎ। মৌঢ্যাৎ মূর্খত্বাদ্যৈতাঃ আত্মিনাম্ অনিমতামিত্যর্থঃ। স্বতোঽন্যাং স্বীয়ভিন্নাম্ আত্মাবৃত্তিমিত্যর্থঃ। বিক্রিয়াম্ পরিণামিত্বাদিধর্ম্মমিত্যর্থঃ, অঞ্জসা প্রত্যক্ষরূপেণ ঐক্ষত—দৃষ্টবান্। তথাহি আদৌ শিষ্যঃ অবিদ্যাপ্রভাবেণ প্রকৃতিধর্ম্মান্ পুরুষে অভিমন্যমানানপি গুরূপদেশেন নৈতে পুরুষধর্ম্মাঃ পরং প্রকৃতিধর্ম্মা এবেতি সাক্ষাৎকৃত্য জ্ঞাননিষ্ঠাং লেভ ইতি ভাবঃ।

অথ অনন্তরং প্রকৃতিবিক্রিয়ায়াঃ প্রাকৃতত্বেন সাক্ষাৎকরণানন্তরম্। অসৌ পরিণামিত্বাদিধর্ম্মবতী প্রকৃতিঃ অহং আত্মা ন। হি যস্মাৎ ইয়ং প্রকৃতিঃ কলুষাত্মিকা মলিনাত্মিকা। অহং আত্মা চ শুদ্ধবুদ্ধস্বভাবঃ। ইতি এবং বিদন্ জ্ঞানী

---

কেহ ইহার ক্ষয়সাধন করিতে পারে না। ইনি অসঙ্গ বলিয়া কাহারও প্রতি আসক্ত হন না। ইনি বেদনাবহির্ভূত, কাজেই কোনও কারণে দুঃখিত বা হিংসিত হন না।

৩ অনু। স্মৃতিও বলেন যে—'সেই শিষ্য অনন্তর গুরুরূপদর্পণদ্বারা উপদিষ্ট হইয়া বাহ্য ইন্দ্রিয়ের প্রত্যাহরণপূর্ব্বক মূঢ়তাপ্রযুক্ত ( পূর্ব্বে ভ্রমবশতঃ ) আত্মাতে আরোপিত প্রকৃত্যাদিনিষ্ঠ বিকার, (পরে) প্রকৃত্যাদির বলিয়াই প্রত্যক্ষ করিয়াছিল।'

'অনন্তর সেই জ্ঞানী শিষ্য বুঝিতে পারে যে এই বিকারযুক্ত প্রকৃতি প্রভৃতি আত্মা নহে, কারণ প্রকৃতি পরিণামী, সুখ ও দুঃখ

सूत्रञ्च—एवं तत्त्वाभ्यासान्नेति नेतीति त्यागाद् विवेकसिद्धिरिति। तत्त्वज्ञानस्य लक्षणञ्च मात्स्ये श्रुतम्—

अव्यक्ताद्ये विशेषान्ते विकारेऽस्मिंश्च वर्णिते।
चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते ॥ ४ इति—

---

सन् तां प्रकृतिं त्यजति मलिनात्मकप्रकृतितो विविच्य आत्मानं जानातीतिभावः। अथवा त्यजति तदीयान् धर्म्मान् शुद्धबुद्धस्वभावे परमात्मनि नाभिमन्यत इत्यर्थः। एवं उक्तरूपेण आत्मनि देहेन्द्रियादिभ्यः देहाद्यपेक्षया इत्यर्थः। शुद्धत्वेन ज्ञाते ज्ञाते सति, इयं निखिला सविकारा परिणामिनी प्रकृतिः अहिचर्म्मवत् सर्पनिर्म्मोकवत् त्यक्तप्राया त्यक्तेव भवति। तत्त्वज्ञानसमुदये सत्यपि यावन्न प्रारब्धकर्म्मपरिसमाप्तिः तावत् शरीरस्य तदीयकर्म्मणाञ्च अविरामेण साकल्यतः तत्परित्यागस्य अनुपपत्तेः न सामग्र्येण त्यक्ता प्रकृतिः, परन्तु त्यक्तप्राया एवेति। अहिचर्म्मवदिति दृष्टान्तेन यथा—अहिना कृते चर्म्मपरिहारे न तस्य कापि शरीरक्षतिः परं चिक्कणत्वादिका गुणा एव, तथा आत्मना कृते प्रकृतिपरिहारे नात्मनः कापि क्षतिः, किन्तु प्रकृतिप्रतिबिम्बकृत-मालिन्यापसारेण स्वच्छत्वमेवेति सूत्रार्थो ज्ञेयः।

---

প্রভৃতি ধর্ম্মযুক্ত এবং আত্মা শুদ্ধবুদ্ধস্বভাব। এইরূপে প্রকৃতিকে জানিয়া উহার ধর্ম্ম আত্মাতে আরোপ করিতে বিরত হয়। এইরূপে দেহ ও ইন্দ্রিয়াদি হইতে ভিন্ন আত্মার বিশুদ্ধরূপে জ্ঞান হইলে, বিকারযুক্ত এই নিখিল প্রকৃতিই অহিচর্ম্মবৎ ত্যক্তপ্রায় হইয়া থাকে। অর্থাৎ সর্প যখন নির্ম্মোক বা খোলস্ ত্যাগ করে, তখন তাহার শরীরের দীপ্তি শত গুণ অধিক চাকচিক্যযুক্ত হয়, নির্ম্মোকত্যাগে তাহার কোনও ক্ষতি হয় না; সেইরূপ আত্মা যখন প্রকৃতিকে স্বরূপত জানিয়া ত্যাগ করেন, তখন প্রকৃতির সঙ্গপ্রযুক্ত পূর্ব্বস্থিত মালিন্য বিদূরিত হওয়ায় আত্মারও অধিক দীপ্তি আবির্ভূত হইয়া থাকে, পরন্তু উহাতে তাহার কোনও ক্ষতি হয় না এবং অণুমাত্র পূর্ব্বসংসর্গের চিহ্ন তাহাতে দৃষ্টিগোচর হয় না।

यद्यप्यन्योन्यभेदज्ञानमेव विवेकज्ञानं तथाप्यात्मविशेष्यकमेव तन्मोक्षकारणं भवति। आत्मा वाऽरे द्रष्टव्य इत्यादिश्रुतिस्मृतिभ्यः (५)।

---

(४) नेति नेति त्यागादिति तत्त्वाभ्यासादित्यस्य विवरणम्। विवेकसिद्धिः विवेकज्ञानम्।

अव्यक्ताद्य इति—अतद्गुणसंविज्ञानो बहुव्रीहिः। तद्गुणसंविज्ञानबहुव्रीहिस्वीकारे प्रकृतेरपि लाभेन विकार इति विशेषणस्य तत्र बाधेन असंगतेः। अथवा चकारस्य भिन्नक्रमत्वमुपक्रम्य अन्ते'च दृश्यमानस्थूलभूतविकारभूते घटपटादौ विकारे इत्यर्थः कल्प्यः तथाच तद्गुणसंविज्ञान एवायं बहुव्रीहिः। विशेषाः स्थूलभूतानि तदन्ते तत्पर्य्यन्ते इत्यर्थः। वर्णिते गुरुणा अर्थतो विहते सति चेतनाचेतनयोः अन्यत्वं परस्परं भेदः तस्य ज्ञानेन। ज्ञानं विवेकज्ञानम् उच्यते। तथाहि चेतनाचेतनयोर्भेदेन उपलब्धिरेव तत्त्वज्ञानमिति फलितमिति भावः।

(५) ननु मात्स्ये चेतनाचेतनान्यत्वज्ञानस्य तत्त्वज्ञानत्वे चेतनधर्म्मिकमचेतनप्रतियोगिकभेदज्ञानं अचेतनधर्म्मिकं चेतनप्रतियोगिकभेदज्ञानञ्चेति द्वयमेव तत्त्वज्ञानपदवाच्यं भवति। तत् किमुभयप्रकारमेव तत् मोक्षहेतुरन्यथा वा, इत्याकाङ्क्षायामाह यद्यपीत्यादि। अन्योन्यभेदज्ञानम् आत्मप्रतियोगिकभेदप्रकारकमनात्मविशेष्यकम् अनात्मप्रतियोगिकभेदप्रकारकमात्मविशेष्यकञ्च ज्ञानमित्यर्थः। आत्मविशेष्यकमेवेति—

---

৪ অনু। সূত্রও দেখা যায়—'এইরূপে তত্ত্বাভ্যাসহেতু নেতি নেতি করিয়া প্রকৃত্যাদির ত্যাগহেতু বিবেকজ্ঞান সিদ্ধ হয়।

তত্ত্বজ্ঞানের লক্ষণ মৎস্যপুরাণে করা হইয়াছে যথা—অব্যক্ত হইতে আরম্ভ করিয়া বিশেষ অর্থাৎ পঞ্চমহাভূত পর্য্যন্ত পদার্থ ও বিকারভূত পদার্থের বর্ণন। হইলে চেতন ও অচেতনের ভেদজ্ঞানকেই প্রকৃত তত্ত্বজ্ঞান বলা হয়।

नन्वनात्मन्यात्मबुद्धिरूपा याऽविद्या पातञ्जलादिषूक्ता तस्याः कथमात्मविशेष्यकविवेकज्ञाननाश्यत्वं प्रकारादिभेदादिति चेन्न। तादृश्याविद्याया अनात्मविशेष्यकविवेकज्ञानद्वारेणाऽत्मविशेष्यकज्ञाननाश्यत्वादिति। यच्च योगेन निर्विकल्पकमात्मज्ञानं जायते तदु विवेकज्ञानद्वारैव मोक्षकारणं भवति, न तु साक्षादविद्यानिवर्त्तकत्वाभावात्। अहं गौरः कर्त्ता सुखी दुःखीत्यादिज्ञानमेव ह्यविद्या, संसारानर्थहेतुतया श्रुतिस्मृति-

---

आत्मा प्रकृत्यादिभ्यो भिन्न इत्याकारकमेव नतु प्रकृत्यादय आत्मभिन्ना इत्येवंरूपमनात्मविशेष्यकमित्येवशब्दार्थः। तत्र श्रुतेर्निगमकतामाह 'आत्मा वारे' इत्यादिना। द्रष्टव्य इत्यस्य विवेकेन साक्षात्कर्त्तव्य इत्यर्थः। तथाहि आत्मानं विशेष्यं कृत्वा प्रकृतिप्रतियोगिकभेद उपलब्धव्य इत्यर्थकश्रुतौ आत्मविशेष्यकप्रकृतिभेदज्ञानस्यैव मोक्षफलकत्वोपदेशेन तथाभूतमेव तत् मोक्षकारणं नान्यत्। स्मृतिश्च—'नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टानुपश्यति। गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति' इत्यादिः। तत्र तत्र सर्व्वत्रैव प्रकृत्यादिप्रतियोगिकभेदप्रकारकमात्मविशेष्यकमेव ज्ञानं मोक्षसाधनमुपदिष्टमिति।

(६) पातञ्जलादिष्विति—तदुक्तं पातञ्जलसूत्रे 'अनित्याशुचिदुःखानात्मसु नित्य-

---

৫ অনু। যদিও পরস্পরের ভেদজ্ঞানই বিবেকজ্ঞান, তথাপি আত্মবিশেষ্যক প্রকৃত্যাদিভেদপ্রকারক জ্ঞানই মোক্ষকারণ তত্ত্বজ্ঞান বলিয়া বুঝিতে হইবে। কারণ 'আত্মাকে শ্রবণ করিবে, মনন করিবে অর্থাৎ প্রকৃত্যাদি ভিন্নরূপে জানিবে, নিদিধ্যাসন করিবে ও যোগজশক্তিবশতঃ প্রত্যক্ষ করিবে' এই অর্থে যে শ্রুতি আছে এবং অন্য সকল স্মৃতি আছে তাহা দ্বারা ঐরূপ আত্মবিশেষ্যক জ্ঞানের মোক্ষকারণতাই প্রতিপন্ন হয়।

न्यायसिद्धा, तस्याश्च निवर्त्तिका नाऽहं गौर इत्या दिरूपा विवेकख्यातिरेव भवति ( ६ ) ॥

---

शुचिसुखात्मख्यातिरविद्येति । प्रकाराद्भेदादिति—समानप्रकारकभावाभावबुद्ध्यो-रेव विरोधाभ्युपगमेन भिन्नप्रकारकयोस्तयोः प्रतिबध्यप्रतिबन्धकभावविरहादिति भावः । तादृश्याविद्यायाः अनात्मविशेष्यकात्माभेदप्रकारकख्यातिरूपायाः पातञ्जलनिरुक्ताया इत्यर्थः । अनात्मेत्यादि—तथाहि आत्मविशेष्यकानात्मप्रतियोगिकभेदप्रकारकज्ञानेन तुल्यवित्तिवेद्यतया अनात्मविशेष्यकमनात्मप्रतियोगिकभेदप्रकारकं ज्ञानं जन्यते, तेनैव च साक्षात् समानप्रकारकतया तादृश्यविद्या निवर्त्त्यते, प्रकृते आत्मविशेष्यकतत्त्वज्ञानन्तु तद्द्वारा अविद्यानाशे प्रयोजकमिति भावः । निर्विकल्पकमिति—निर्विकल्पकत्वञ्च प्रकारता-विशेष्यताशून्यं ज्ञानम् ।

नतु साक्षादिति—ज्ञानयोर्निवर्त्त्यनिवर्त्तकभावस्य प्रकारताविशेष्यतासमाश्रयेण कल्पितत्वात् प्रकारताविशेष्यताशून्यज्ञानस्य तदसम्भवेन प्रकारविशेष्यवैशिष्ट्यावगाहि-ज्ञानविशेषं द्वारीकृत्यैव तत्सम्भव इति । अविद्या हि मिथ्याज्ञानविशेषः । एवं किं यस्य कस्यापि मिथ्याज्ञानस्य अविद्यापदवाच्यस्य संसारहेतुत्वं ? नेत्याह यदं

---

৬ অনু। এখন প্রশ্ন হইতেছে এই যে, পাতঞ্জলাদি দর্শনে যে অনাত্মাতে আত্মবুদ্ধিকে অবিদ্যা বলা হইয়াছে। আত্মবিশেষ্যক বিবেক জ্ঞান হইতে উহার নাশ কিরূপে সম্ভাবিত হইতে পারে। কারণ উক্ত জ্ঞান অবিদ্যার সমান-প্রকারক হয় নাই।

ইহার তাৎপর্য্য এই যে, জ্ঞানদ্বয় বিভিন্নপ্রকারক অর্থাৎ অভাবাংশ ত্যাগ করিয়া অপর অংশেও অসমান প্রকারক হইলে পরস্পর বিরোধী হয় না, এস্থলে একটী জ্ঞানে আত্মা প্রকার অনাত্মা বিশেষ্য ও অপর জ্ঞানে আত্মা বিশেষ্য অনাত্মা প্রকার, কাজেই প্রকারাংশে তুল্যতা না থাকায় বিরোধিতা অসম্ভব বলিয়া আপত্তি হইয়াছে।

समाने विषये ग्राह्याभावत्वप्रकारकग्राह्याभावज्ञानत्वेनैव

---

गौर इत्यादिना। तथाहि अहंपदार्थे आत्मनि गौरत्वादिस्तदद्वत्तिधर्म्मस्य आरोप एव संसारहेतुभूता अविद्या। तस्याश्च तादृश्याविद्यायाः निवर्त्तिका नाहं गौरः अहं गौरभिन्न इत्येवंरूपा विवेकख्यातिः गौरभेदबुद्धिरेव। तस्या एव तदविद्यासमान-प्रकारकत्वात्। ननु पातञ्जलसूत्रे च अनात्मविशेष्यकात्माभेदप्रकारकज्ञानस्यैव अविद्यात्वं प्रतिपादितं सूचितञ्च प्राक् स्वयमपि तदेवाविद्यास्वरूपवर्णने प्रमाणभावेन, तत् किमिति अहं गौर इत्याद्यात्मविशेष्यकमेव ज्ञानमविद्यास्वरूपमित्युच्यत इति चेन्न यद्यपि तादृशमेव मिथ्याज्ञानमविद्येति पातञ्जलादिषु उपदिष्टं तथापि यत्र यत्र तादृशं मिथ्याज्ञानं तत्र सर्व्वत्रैव तुल्यवित्तिवेद्यतया आत्मविशेष्यकमपि मिथ्याज्ञान-मस्त्येवेति नियममभिसन्धाय तदुच्यत इति ध्येयम्।

---

ইহার উত্তরে বলা হয় এই যে, উক্ত অবিদ্যার নাশ অনাত্মবিশেষ্যক আত্মভেদপ্রকারক বিবেকজ্ঞানকে দ্বার করিয়া আত্মবিশেষ্যক অনাত্ম-ভেদপ্রকারক জ্ঞান হইতে হইয়া থাকে। অর্থাৎ আত্মবিশেষ্যক অনাত্ম-ভেদপ্রকারক বিবেকজ্ঞান হইলেই তুল্যানুভবে অনাত্মবিশেষ্যক আত্ম-ভেদপ্রকারক জ্ঞানও উৎপন্ন হইয়া যাইবে, কাজেই উক্ত তত্ত্বজ্ঞান হইতে যে অনাত্মবিশেষ্যক আত্মভেদপ্রকারক জ্ঞান হইল, উহা প্রকৃত অবিদ্যার মুখ্য বিরোধী বলিয়া অবিদ্যার নিবৃত্তি অসম্ভব হয় না।

যোগনিবন্ধন যে নির্ব্বিকল্পক আত্মজ্ঞান হয় উহা বিবেক জ্ঞানকে দ্বার করিয়াই মোক্ষের কারণ সাক্ষাৎরূপে নহে, কারণ উহা অবিদ্যার নিবর্ত্তক নহে। যে হেতু প্রকারতা ও বিশেষ্যতা লইয়াই জ্ঞানের প্রতিবধ্য-প্রতিবন্ধক ভাব কৃপ্ত আছে, নির্ব্বিকল্পক জ্ঞান প্রকারতা ও বিশেষ্যতা শূন্য। আত্মাতে গৌরত্ব, সুখিত্ব দুঃখিত্ব প্রভৃতির জ্ঞানই অবিদ্যা, সংসাররূপ অনর্থের হেতু বলিয়া শ্রুতি স্মৃতি ও যুক্তিবলে সিদ্ধ। উক্তরূপ অবিদ্যার নিবর্ত্তক আত্মাতে গৌরত্বাভাবাদি প্রকারক জ্ঞান।

विरोधात्। अन्यथा शुक्तिनिर्विकल्पकस्याऽपि इदं रजतमिति ज्ञानविरोधित्वापत्तेः (७)। किञ्च यथोक्ताभावज्ञाने ग्राह्यज्ञानविरोधित्वस्याऽऽवश्यकतया निर्विकल्पकज्ञानस्य भ्रमनिवर्त्तकत्वं न पृथक् कल्प्यते गौरवात् (८)।

---

(७) समान इति—विषय इति विशेष्य इत्यर्थः। ग्राह्याभावत्वप्रकारकेति—धर्म्मान्तरप्रकारेण ग्राह्याभावनिष्ठप्रकारताशालिज्ञानस्य प्रतिबन्धकत्वायोगात् ग्राह्याभावत्वप्रकारकत्वं ज्ञानविशेषणम्। नहि प्रतिबध्नाति प्रमेयवानिति निश्चयो वह्निमत्त्वादिज्ञानम्। ग्राह्याभावत्वपदेन ग्राह्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वपर्य्यन्तमपि बोध्यम् अन्यथा तथैव दोषापत्तेः। नहि वह्निमान् पर्व्वत इति ज्ञाने प्रतिबन्धकं भवति द्रव्याभाववानिति निश्चयः। तथाहि प्रकृते आत्मत्वावच्छिन्नविशेष्यकगौरत्वादिप्रकारकज्ञानं प्रति आत्मत्वावच्छिन्नविशेष्यकगौरप्रतियोगिकभेदत्वावच्छिन्नप्रकारकनिश्चयस्यैव विरोधित्वेन कॢप्तेन अहं गौर इति ज्ञाने नाहं गौर इति निश्चयस्य प्रतिबन्धकतया निरुक्तः। ग्राह्याभावत्वप्रकारकग्राह्याभावज्ञानमपि अनुमानविशेष्यकं न विरोधि भवतीति फलबलमनुरुध्य समाने विषये इत्युक्तम्। इदञ्च प्रागुक्तं आत्मविशेष्यकज्ञानस्य अनात्मविशेष्यकज्ञानद्वारा अविद्यानिवर्त्तकत्वमपि समर्थयते। अन्यथेति—तादृशप्रकारताघटितधर्म्मान्तर्भावेनाविरोधित्वे इत्यर्थः। शुक्तिनिर्व्विकल्पकस्यापि प्रकारताविशेष्यताशून्यशुक्तिज्ञानस्यापीत्यर्थः। तथाहि निर्व्विकल्पकज्ञानस्य प्रकारताशून्यत्वेन तादृशप्रतिबन्धकतावच्छेदकधर्म्मानाक्रान्ततया न विरोधित्वं किन्तु इदं न रजतमिति निश्चयस्यैव, तस्य तादृशधर्म्माक्रान्तत्वादिति भावः।

(८) 'ननु 'यद्विशिष्टबुद्धिर्यत्र विरोधिनी तद्विशिष्टबुद्धिपूर्व्वक एव तदुपलक्षितधर्म्मिमात्रविषयकनिर्व्विकल्पकनिश्चयस्तद्विरोधी' इति वेदान्तिनामिव सांख्यानामपि

---

१ অস্তু। কারণ, সমান বিষয়ে গ্রাহ্যাভাবত্ব রূপে গ্রাহ্যাভাবের জ্ঞানই বিরোধী জ্ঞান। তাহা না হইলে শুক্তির নির্ব্বিকল্পক জ্ঞানও 'ইহা রজত' এইরূপ জ্ঞানের বিরোধী হইতে পারে।

अपि चाऽथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्तीत्यादिश्रुत्या विविक्तोपदेशापेक्षयोत्तमोपदेशो नाऽस्तीत्युच्यते ।

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षञ्च ये विदुर्यान्ति ते परम् ॥

इति गीतादिवाक्यैश्च विविक्तज्ञानस्यैव मोक्षहेतुत्वमुच्यते । अतो विविक्तज्ञानमेव साक्षादविद्यानिवृत्त्या मोक्षहेतुः (৯)

---

नयमी स्वीकृते विरोधिज्ञानविशिष्टनिर्विकल्पकात्मज्ञानस्य मिथ्याज्ञानविरोधित्वं अवश्य-मास्थातुमित्यतो गौरवदोषेण तदपि परिहरति किञ्चेत्यादिना । तथाहि—धर्म्मि-विषयकज्ञानमात्रस्य विरोधित्वकल्पने प्रकृताभावभिन्नप्रकारकात्मज्ञानस्यापि विरोधित्वं प्रसज्यत इति निर्विकल्पकात्मज्ञानमेव विरोधि कल्पनीयम् । इत्थञ्च अभावप्रकारक-सविकल्पकात्मज्ञानस्य सिद्धप्रतिबन्धकभावस्य प्रतिबन्धकत्वं न स्यादिति पृथक्तया तादृशज्ञानस्यापि प्रतिबन्धकत्वमावश्यकमेवेति प्रतिबध्यप्रतिबन्धकभावद्वयी कल्पनीया, अतो लाघवात् आत्मविवेकज्ञानस्यैव मिथ्याज्ञाननिवर्त्तनद्वारा मोक्षहेतुत्वमिति फलित-मिति भावः ।

(৯) तदेव समर्थयितुमाह अपि चेत्यादि । तथाहि—अन्तरिन्द्रियादिभेदप्रका-रकात्मस्वरूपज्ञानात्मकविवेकज्ञानमेव मोक्षसाधनतया परमोत्कृष्टं, न तु ततोऽन्यत् किमपि, इत्येव निरुक्तश्रुत्या आवेदनात् सविकल्पकात्मज्ञानमेव मोक्षसाधनं न तु निर्विकल्पकमित्यायातमिति भावः । उत्तमोपदेश इत्यत्र उपदेश्यगतमुत्तमत्वं मोक्ष-प्रयोजकत्वमेव श्रुतौ परशब्दस्य उत्कृष्टार्थकतया तदर्थः परिप्राप्तः । गीतावाक्यैः

---

৮ অনু। অপিচ উক্তরূপ অভাবজ্ঞানে গ্রাহ্যজ্ঞানের বিরোধিতা অবশ্য কল্পনীয় বলিয়া নির্ব্বিকল্পক জ্ঞানকে পৃথক্‌রূপে ভ্রমজ্ঞানের নিবর্ত্তক কল্পনা করা হয় না, কারণ উহাতে গৌরব হয়।

योगेन केवलात्मसाक्षात्कारस्तु योग्यानुपलब्धिविषयोपाध्यादि-
गतधर्माभावमुपाध्यादिभेदञ्च ग्राहयति, ततोऽविद्यानिवृत्ति-

---

स्पष्टतया तदेवानूदितमुदाहरति क्षेत्रेत्यादिना। क्षेत्रं शरीरं, एतच्च तन्मात्राहङ्कार-
बुद्धिप्रकृतीनामप्युपलक्षणम्। क्षेत्रज्ञः पुरुषः। तयोः एवं निरुक्तरूपम् अन्तरं भेदं
भूतप्रकृतिमोक्षञ्च भूतानां प्रकृतिः तस्याः सकाशात् भूतेभ्यो देहरूपेण परिणतेभ्यः एतच्च
स्थूलमात्रोपलक्षणं प्रकृतेः सत्त्वरजस्तमोगुणात्मिकायाः मूलप्रकृतेरित्यर्थः, एतच्च सूक्ष्म-
जड़ोपलक्षणम्। तस्मात् सर्व्वस्मात् मोक्षं मोक्षसाधनं ज्ञानादिकं ये ज्ञानचक्षुषा
विदुः विदन्ति। केचित्तु मूलभूतायाः प्रकृतेः पर्य्यन्तभूतानाञ्च भूतानामुपादानेन
आद्यन्तग्रहणन्यायेन पुंस्त्वितत्त्वादीनामपि लाभात् नानुपपत्तिरित्याहुः। ते परं मोक्षं
यान्ति प्राप्नुवन्ति। विवेकज्ञानस्य च तादृशदेहादिभेदप्रकारकपुरुषविशेष्यकसाक्षात्-
कारत्वैव न तु निर्व्विकल्पकस्यापीत्येवशब्दस्यवच्छेद्यम्। अतः इति श्रुतिस्मृत्यादिभिः
सप्रमाणत्वादित्यर्थः।

(१०) नन्वेवं विवेकज्ञानस्यैव अविद्यानिवृत्तिद्वारा मोक्षहेतुत्वे योगेन निष्पादितस्य
केवलात्मसाक्षात्कारस्य निर्व्विकल्पकरूपस्य मोक्षे कीदृश उपयोग इत्याकाङ्क्षायामाह—
योगेनेत्यादि। केवलस्य सुखदुःखादिमुक्तस्य आत्मनः साक्षात्कारः निर्व्विकल्प-
कात्मज्ञानमित्यर्थः। अथवा केवल इति साक्षात्कारांश विशेषणम्। साक्षात्कार-
गतं केवलत्वञ्च प्रकारताविशेष्यताराहित्यम् इति।

योग्यानुपलब्धिविषयेति—योग्यस्य प्रत्यक्षयोग्यस्य प्रतियोगिनः अनुपलब्धिः 'अत्र
यदि घटः स्यात् तदा घटवत्तया उपलभ्येत' इत्येवंरूपा आपत्तिः अभावप्रत्यक्षे तन्त्रम्,

---

৯ অনু। এবং 'অথাত' ইত্যাদি শ্রুতি দ্বারা বিবেকোপদেশ অপেক্ষা আর উত্তম উপদেশ নাই, ইহাই প্রতিপাদিত হইয়া থাকে। 'ক্ষেত্রক্ষেত্রজ্ঞয়োঃ' ইত্যাদি গীতাবাক্যদ্বারাও বিবেকজ্ঞানেরই মোক্ষ-হেতুত্ব কথিত হয়। অতএব বিবেকজ্ঞানই সাক্ষাৎ অবিদ্যার নিবৃত্তি-সাধনদ্বারা মোক্ষের কারণ।

रिति (१०)। एतेन सर्व्वभूतेषु समताज्ञानमात्मनः सर्वा-
त्मकत्वादिज्ञानञ्च श्रुतिस्मृत्योर्गीयमानं विवेकज्ञानस्यैव
शेषभूतं सर्व्वदर्शनेषु मन्तव्यम्। ज्ञानान्तराणां साक्षादभि-

---

सद्विषयेत्यर्थः। तथाहि केवलात्मसाक्षात्कारे सुखदुःखादीनां बुद्धितत्त्वरूपोपाधिगत-धर्म्माणाम् अनुपलब्ध्या तदभावस्य उपाधितादात्म्यस्य अनुपलब्ध्या च उपाधिभेदप्रत्यक्षस्य सहसम्भवेन तत्त्वज्ञानजन्यमोक्षे निर्व्विकल्पकात्मस्वरूपप्रतिपत्त्युपयोग इति भावः। सेयमनुपलब्धिः वेदान्तिविशेषाणां प्रमाणान्तरमभावग्राहकमिति ध्येयम्।

(११) ननु श्रुतिप्रामाण्येन आत्मविवेकज्ञानस्य मोक्षहेतुत्वमवधृतम्, तत्र सर्व्व-भूतेषु समताज्ञानस्य सर्व्वात्मैकत्वज्ञानस्य मोक्षहेतुत्वोपदेशकश्रुतिस्मृतिभ्यां विरुध्यते, तदत्र का गतिरित्याशङ्क्याह—एतेनेत्यादि। समताज्ञानमिति—तत्र श्रुतिर्यथा 'निरञ्जनः परमं साम्यमुपैति दिव्य'मिति। तत्र स्मृतिर्यथा 'सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि। समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति'। इति। सर्व्वात्मकत्वादिज्ञानञ्चेति—अत्र श्रुतिर्यथा 'नित्यः सर्व्वगतो ह्यात्मा कूटस्थो दोष-वर्ज्जितः। एकः स भिद्यते शक्त्या मायया न स्वभावतः'। इत्याद्या। स्मृतिर्यथा 'यावानात्मनि बोधात्मा तावानात्मा परात्मनि। य एवं सततं वेद जनस्थोऽपि न मुह्यति। इति। अन्या अपि श्रुतयः स्मृतयश्च अनुसन्धेयाः।

शेषभूतं अङ्गभूतमित्यर्थः। तथाहि विवेकज्ञानमेव मुख्यं कारणं मोक्षस्य सर्व्वभूतेषु समताज्ञानादिकञ्च श्रुतिस्मृत्यादिषु मोक्षसाधनतया निरुक्तं तस्यैव विवेक-ज्ञानस्य साधकमिति भावः। अत एव मुक्तिवादे गदाधरेण ब्रह्मात्मैकत्वविज्ञानस्य स्वविश्रान्तितत्त्वज्ञानहेतुत्वेन परिकल्पनया श्रुत्युपपत्तिः कृता सुसङ्गच्छते। तेन च

---

১০ অনু। যোগবশতঃ কেবল আত্মার সাক্ষাৎকার যোগ্যানুপলব্ধিরূপ অভাবপ্রত্যক্ষের হেতুরূপে উপাধিপ্রভৃতিগত ধর্ম্মাভাব বা উপাধ্যাদিভেদ প্রতিপাদন করিয়া থাকে। অনন্তর অবিদ্যার নিবৃত্তি হয়।

ज्ञानानिवर्त्तकत्वात्। ब्रह्ममीमांसायां त्वयं विशेषो यत् परमात्मविवेकशेषत्वम्। सांख्यशास्त्रे तु सामान्यात्मविवेकशेषत्वमिति दिक् (११)

---

सर्व्वदर्शनेष्वित्यपि नासमञ्जसं, तत्तन्मतसिद्धतत्त्वज्ञाने श्रुतिस्मृत्यादिसिद्धस्य सर्व्वभूतसमताज्ञानादौ मोक्षोपयोगित्वस्य गत्यन्तराभावेन तथैवाङ्गत्वकल्पनाया आवश्यकत्वादिति। नहि किञ्चिदस्ति दर्शनमनास्तिकानां यत्र श्रुतिर्वा स्मृतिर्वा न प्रमाणमिति भावः। ज्ञानान्तराणामिति—प्रकृतविवेकज्ञानातिरिक्तज्ञानानामित्यर्थः। साक्षात् ज्ञानान्तरमद्वारीकृत्येत्यर्थः। अभिमानानिवर्त्तकत्वात् आत्मविशेष्यकप्रकृत्याद्यभेदप्रकारकज्ञानाविरोधित्वात् समानप्रकारकज्ञानस्यैव विरोधित्वेन विभिन्नप्रकारकज्ञानं प्रति समताज्ञानादीनामतथात्वसिद्धेरिति। यच्च दर्शनान्तरेषु ज्ञानान्तराणामपि मोक्षसाधनत्वमुक्तं तत् प्रकृतविवेकज्ञानद्वारेति मन्तव्यमिति कापिलानामाशयः, नातो दर्शनभेदेन मतभेदे सत्यपि विरोधाद्यवतार इति भावः।

ब्रह्ममीमांसायां वेदान्ते। विशेष इति वैलक्षण्यम् इत्यर्थः। परमात्मविवेकशेषत्वम् परमात्मविवेकज्ञानाङ्गत्वम्। ब्रह्मस्वरूपगोचरसाक्षात्काररूपमोक्षसाधनाङ्गत्वम्। सामान्यात्मा साधारणो य आत्मा तस्य विवेकः भेदज्ञानं प्रकृत्यादित इत्यर्थः। तच्छेषत्वं तदङ्गत्वम्। तथाहि वेदान्तेषु यद् यदेवोपदिश्यते तस्य सर्व्वस्यैव अप्राधान्यं प्राधान्यञ्च उद्देश्यविधया ब्रह्मस्वरूपसाक्षात्कारस्य योगेन ज्ञातात्मलाभस्य।

---

১১ অনু। ইহা দ্বারা বুঝিতে হইবে যে, শ্রুতিস্মৃতিকথিত সর্ব্বভূতে সমতাজ্ঞান ও আত্মার সর্ব্বাত্মকত্বজ্ঞান বিবেকজ্ঞানেরই অঙ্গভূত। কারণ, অপর কোনও জ্ঞান সাক্ষাৎরূপে অভিমানের নিবর্ত্তক হয় না। ব্রহ্মমীমাংসা বা বেদান্তে বৈশিষ্ট্য এই যে, উহাতে পরমাত্মবিবেক (মোক্ষের) অঙ্গ আর সাংখ্যশাস্ত্রে সামান্য আত্মবিবেক (মোক্ষের) অঙ্গ।

ननु यथोक्तविवेकख्यातितोऽप्यत्यन्तमविद्योच्छेदो न घटते ; विवेकख्यातेरविद्याप्रतिबन्धकत्वमात्रत्वेन विवेकख्यातिनाशोत्तरं पुनरभिमानसम्भवात् । शुक्तिरजतविवेकदर्शिनोऽपि कालान्तरे शुक्तौ रजतभ्रमवदिति ? नैवम् । दृष्टान्तवैषम्यात् । शुक्त्यादिषु जातेऽपि साक्षात्कारे दूरत्वादिरूपविषयदोषाणां पटलादिरूपकरणदोषाणां चोत्पत्तिसम्भवेन पुनर्भ्रमो

---

(१२) एतावता विवेकख्यातिरविद्यामुच्छिद्य मोक्षं जनयतीत्येव स्थितं भवति ; अथ विवेकख्यातिर्यावत्कालं स्थिता तावत्कालमेव अभिमानस्य मिथ्याज्ञानविशेषरूपस्य आत्मलाभे असामर्थ्येन तस्यास्तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वेन तद्विनाशानन्तरं स्वीयचतुर्थक्षणे पुनरभिमानसमुत्पादे संसारधाराया अविच्छेद एव स्यादित्याशङ्का समाधातुमुपक्रमते—नन्वित्यादिना । यथोक्तविवेकख्यातितः आत्मविवेकज्ञानात् ; अभिमानसम्भवादिति प्रतिबन्धकस्य अव्यवहितपूर्ववर्त्तित्वनियमेन विवेकख्यातिनाशक्षणरूपाव्यवहितप्राक्क्षणे तादृशविवेकज्ञानसत्त्वेन तदुत्तरक्षणे अभिमानसमुत्पादे बाधकाभावादिति । एवं सति नात्यन्तमविद्योच्छेदः । अत्यन्तमविद्योच्छेदश्च स्वसमानाधिकरणाविद्याप्रागभावासमानकालीनाविद्याध्वंसः । तदविद्याविनाशानन्तरमविद्याया उत्पादे प्राक्तनाविद्याध्वंसस्य स्वसमानाधिकरणाविद्याप्रागभावसमानकालीनत्वात् न तथात्वमिति भावः । तत्र पुनरविद्योत्पत्तौ लौकिकं दृष्टान्तमाह शुक्तीत्यादिना ; कालान्तरे तादृशविवेकदर्शनासत्त्वदशायामित्यर्थः । तदानीं शुक्तौ रजताभेदज्ञानरूपभ्रमप्रतिबन्धकीभूतस्य शुक्तौ रजतविवेकदर्शनस्य अभावेन तदुत्तरक्षणे प्रतिबध्यतावच्छेदकधर्म्माक्रान्तस्य शुक्तौ रजतभ्रमस्य सम्भवादिति भावः । दृष्टान्तवैषम्यादिति दार्ष्टान्तिके इति शेषः । साक्षात्कारः इति रजतादिभेदसाक्षात्कार इत्यर्थः ; युक्त इति—कारणसत्त्वस्य प्रकृते कार्य्यसत्त्वमूलत्वात् इति भावः ।

---

১২ অনু। এখন প্রশ্ন হইতেছে এই যে, উক্তরূপ বিবেকজ্ঞান হইতেও অবিদ্যার আত্যন্তিক উচ্ছেদ সংঘটিত হইতে পারে না। কারণ

युक्तः। अनात्मन्यात्माभिमाने त्वनादिवासनैव दोषः सर्वास्तिकसम्मतः, जातमात्रस्याऽभिमाने दोषान्तरानुपलब्धेः। सा मिथ्याज्ञानवासना यदा विवेकख्यातिपरम्पराजन्यदृढ़वासनोन्मूलिता तदैव विवेकसाक्षात्कारनिष्ठोच्यते। तत्पूर्वमवश्यं वासनालेशतो मिथ्याज्ञानांशस्य कस्याऽप्यात्मनि भावात्। तस्याञ्च विवेकख्यातिनिष्ठायां जातायां न पुनरभिमानः सम्भवति, वासनाख्यदोषाभावादिति तु महद् वैषम्यम्। यदि तु बुद्धिपुरुषयोरन्योन्यप्रतिबिम्बनादिकमविवेककारणं दोष

---

नतु कथमेवं दृष्टान्तवैषम्यं, प्रकृतेऽपि अभिमानमूलस्य दोषस्य पुनः सम्भवेन कथमभिमानो नोपजायतामित्याकाङ्क्षायामाह—अनात्मन्यादि। अनादिवासनैवेति—वासना पूर्व्वजन्मजनितमिथ्याज्ञानजसंस्कारविशेषः। तस्या अनादित्वञ्च प्रवाहरूपेण जायमानत्वम्, न तु यथाश्रुतमुत्पत्तिशून्यत्वमसिद्धेः। एतेन अनादिभावमात्रस्य अविनाशित्वनियमेन निरुक्तवासनाया अनादिभावरूपाया विवेकख्यातिनाश्यत्वानुपपत्तिर्निरस्ता। अनादितामिमां कार्य्यानादितेति केचिदुपपिपादयिषवः 'तदा तत्तत्परस्तानां व्यक्तीनामेकया विना। अनादिकालवर्त्तित्वं या सा कार्य्यानादिता मता"। इति वचनमुदाहरन्ति। प्रवाहनित्यत्वमित्यपि तस्या अनादितायाः संज्ञामाहुः। तच्च स्वसजातीयध्वंसव्याप्यप्रागभावप्रतियोगित्वम्। यथाहि शास्त्रे कर्म्मणामदृष्टानाञ्च स्वीक्रियते। बहुजन्मजनितमिथ्याज्ञानजसंस्कारस्य सुदृढ़मूलस्य न विवेकज्ञानमात्रेण शक्यः समुच्छेदः परन्तु निष्ठां गतेनैव विवेकज्ञानेनेति विशिष्याह विवेकख्यातिपरम्परेत्यादि। वासनाख्यदोषाभावादिति—वासनाख्यदोषो नाम अभिमानजनने कारणं, विवेकख्यातिधारायां परिनिष्ठितायां विरोधिनिश्चयसत्त्वे निवर्त्त्यज्ञानवत् निवर्त्त्य-

---

বিবেকখ্যাতি বা বিবেকজ্ঞান অবিদ্যার কেবল প্রতিবন্ধক অত্যন্তবিনাশক নহে, তবে বিবেকখ্যাতির নাশের পর যখন বিবেকখ্যাতি নাই, তদবস্থায় পুনর্ব্বার অভিমান সম্ভব হইতে বাধা কি? যেরূপ

দৃশ্যতে, তদা তু তদ্দোষং বাধিত্বৈব বিবেকসাক্ষাৎকার উদিত ইতি ন তস্য পুনর্ভ্রমহেতুত্বং, ফলবলেন যোগজধর্ম্মাসহকৃতস্যৈব তত্র দোষত্বকল্পনাসম্ভবাদিতি (১২)।

বিবেকখ্যাতিনিষ্ঠা চ গীতাদিষু লক্ষিতা—

---

জ্ঞানজসংস্কারস্যাপি অসত্ত্বেন কারণাভাবপ্রযুক্ত এব কার্য্যাভাবঃ সুসঙ্গচ্ছত ইতি। তদেবং নিরুক্তদৃষ্টান্তদার্ষ্টান্তিকয়োঃ সাম্যবিরহেণ কথমমুনা দৃষ্টান্তেন বস্তুসিদ্ধিরিতি ভাবঃ। নহদ্ বৈষম্যমিত্যস্য 'প্রথমোৎপন্নবিবেকখ্যাতিতঃ তন্নিষ্ঠায়া মহান্ ভেদ' ইত্যর্থ ইতি কেচিৎ। তন্ন তদর্থস্বীকারে দৃষ্টান্তবৈষম্যাদিত্যনেন উপক্রান্তস্য বৈষম্যস্য অনুপপাদনেন অর্থান্তরপ্রসঙ্গাৎ। যোগজধর্ম্মাসহকৃতস্যেত্যাদি—যোগজধর্ম্মশূন্যস্য ইত্যর্থঃ। তথাহি যোগজধর্ম্মাভাবদশায়াং তাদৃশান্যোন্যপ্রতিবিম্বনাদবিবেকখ্যাতিঃ সতি চ যোগজধর্ম্মে তাদৃশান্যোন্য প্রতিবিম্বনসত্ত্বেঽপি ন জীবন্মুক্তাদৌ অবিবেকখ্যাতিরিত্যন্বয়ব্যতিরেকাভ্যাং যোগজধর্ম্মাভাবসহিতস্যৈবান্যোন্যপ্রতিবিম্বনস্য অবিবেকখ্যাতিহেতুত্বং কল্প্যম্। এবঞ্চ যদা যোগর্দ্ধিবশাদ্ বিবেকসাক্ষাৎকারঃ তদুত্তরং যোগজধর্ম্মসত্ত্বেন সত্যপি অন্যোন্যপ্রতিবিম্বনরূপে অবিবেকখ্যাতিহেতৌ দোষে যোগজধর্ম্মাভাববৈশিষ্ট্যরূপবিশেষণবিরহেণ ন পুনরপ্যবিবেকসমুৎপাদ ইতি ভাবঃ। ন চৈবং অন্যোন্যপ্রতিবিম্বনমাত্রস্যৈব অবিবেককারণতায়াং লাঘবমিতি লাঘবজ্ঞানানুগ্রহেণ অন্যোন্যপ্রতিবিম্বতামাত্রস্যৈব কারণত্বকল্পনং যুক্তমিতি বাচ্যম্, ফলমুখগৌরবস্যাদোষত্বাদত এব উক্তং ফলবলেনেতি।

---

শুক্তি ও রজত এই উভয়ের ভেদজ্ঞান একবার হইলেও কালান্তরে অর্থাৎ যখন উক্ত ভেদজ্ঞান নাই তদবস্থায় শুক্তিতে রজতাভেদভ্রম হইয়া থাকে।

তদুত্তরে বলিতেছেন যে—তাহা নহে। কারণ, উক্ত স্থলে দৃষ্টান্তের সহিত বৈষম্য আছে। যথা—শুক্তি প্রভৃতির সাক্ষাৎকার অর্থাৎ স্বরূপজ্ঞান হইলেও দূরত্বাদিরূপ বিষয়গত দোষ এবং পটলাদিরূপ ইন্দ্রিয়গত

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ इति ।

---

१२। ननु कीदृशीयं विवेकख्यातिनिष्ठा यस्याः तादृशवासनासमुच्छेदकत्वमभिप्रेतमित्याकाङ्क्षायां गीताप्रामाण्येन प्रतिपादयितुमाह विवेकख्यातिनिष्ठा चेति ।

---

দোষের পুনরুৎপত্তি সম্ভব হওয়ায় পুনর্ব্বার ভ্রম হইয়া থাকে। অনাত্মাতে যে আত্মাভিমান অর্থাৎ আত্মার অভেদজ্ঞান হয়, তাহার প্রতি অনাদিবাসনাকেই সকল আস্তিকগণ দোষ বলিয়া স্বীকার করিয়াছেন ; কারণ জাতমাত্র বালকের যে অভিমান হয়, তাহাতে অনাদিবাসনা ব্যতীত অন্য কোনও দোষের উপলব্ধি হয় না। সেই মিথ্যাজ্ঞানবাসনা যখন বিবেকখ্যাতিপরম্পরাজনিত দৃঢ় বাসনা দ্বারা উন্মূলিত হয়, তখনই বিবেকসাক্ষাৎকারের নিষ্ঠা বা পরিসমাপ্তি হইয়া থাকে। তৎ-পূর্ব্বে অবশ্যই বাসনালেশের সত্তাহেতু কোনও মিথ্যাজ্ঞান অংশত আত্মাতে বর্ত্তমান থাকে। বিবেকখ্যাতির নিষ্ঠা হইলে আর অভিমান সুসম্ভব হয় না, কারণ বাসনাখ্য দোষ থাকে না। ইহাই মহৎ বৈষম্য।

যদি বুদ্ধি ও পুরুষের পরস্পর প্রতিবিম্বাদিকেই অবিবেকের কারণ দোষ বলিয়া মানা হয়, তাহা হইলে সেই দোষের বাধা জন্মাইয়াই বিবেকসাক্ষাৎকার উৎপন্ন হইয়াছে, এইজন্য পুনর্ব্বার উহা ভ্রমের কারণ হইবে না। ফলানুরোধে যোগজ ধর্ম্মশূন্য দোষেরই দোষত্বকল্পনা সম্ভবপর। অতএব যেস্থলে যোগজধর্ম্ম এবং উক্তরূপ দোষ এই দুইটী আছে, সে স্থলে উক্ত দোষ যোগজধর্ম্মশূন্য না হওয়ায় উহা ভ্রমের কারণ হইল না।

गुणातीतो निवृत्तगुणाभिमानः। अधिकं तु ज्ञानि-लक्षणमग्रे वक्ष्यामः (१३)। नन्वेवमपि विवेकप्रतियोगि-पदार्थानामानन्त्येन प्रातिस्विकरूपैः सर्वपदार्थेभ्यो विवेकग्रहा-सम्भवात् कथं विवेकख्यातेर्मोक्षहेतुत्वमिति चेन्न ; दृश्यत्वपरि-णामित्वादिसामान्यरूपैर्विवेकग्रहसम्भवात्। तथा हि—द्रष्टा

---

प्रकाशञ्चेत्यादि।—एतदर्थो विशदेन गीताटीकादौ द्रष्टव्यः. तथाहि निवृत्तस्य गुणातीतस्य पुरुषस्य या अवस्था सैव विवेकख्यातिनिष्ठेति। तस्यामेव समुदितायां वासनाया अत्यन्तसुच्छेदात् मोक्ष इति भावः।

निवृत्तेति, अत्यन्तनिवृत्तेत्यर्थः। अन्यथा निद्राभिभवस्य निवृत्तत्वे तमादेरति-प्रसङ्गप्रसङ्गात्। ननु किमेतन्मात्रं ज्ञानिस्वरूपमित्याशङ्कायामाह—अधिकन्त्वित्यादि। तथाहि एतन्मात्रस्य प्रकृते उपयोगात् नात्र तदधिकस्वरूपप्रदर्शनमिति भावः। अग्र इति सप्तमपरिच्छेदे, तत्रैव जीवन्मुक्तादिलक्षणज्ञानिस्वरूपनिर्णयस्य निबन्धनात्।

(१४) ननु विवेकख्यातिर्मोक्षकारणमिति स्थितेऽपि विवेकख्यातिरेव कारण-विघ्नवान्न सम्भवति ; तथाहि विवेकख्यातिर्हि भेदज्ञानं, तत्र च प्रतियोगिज्ञानस्य कारण-

---

১৩ অনু। গীতাপ্রভৃতি গ্রন্থে বিবেকখ্যাতিনিষ্ঠার স্বরূপ নির্দ্দিষ্ট আছে। যথা—প্রকাশাত্মক সত্ত্বগুণকার্য্য, প্রবৃত্ত্যাত্মক রজোগুণকার্য্য ও মোহাত্মক তমোগুণকার্য্য। ইহার যে কোনটীর প্রতি যাহার দ্বেষ নাই, যিনি প্রারব্ধবস্তুর প্রতি অবিদ্বেষী এবং নিবৃত্তবস্তুর প্রতি আকাঙ্ক্ষাশূন্য, যিনি উদাসীনের তুল্য থাকিয়া গুণকর্ত্তৃক চালিত হন না, সেই সর্ব্ব-বহির্ভূত নির্লিপ্ত পুরুষকেই গুণাতীত বা নিবৃত্তগুণাভিমান বলা হয়। এস্থলে গুণাতীত শব্দের অর্থ নিবৃত্তগুণাভিমান। ইহা হইতে অধিক যে সকল জ্ঞানিলক্ষণ আছে, তাহা অগ্রে বলা হইবে।

উক্ত গুণাতীত অবস্থাই বিবেকখ্যাতিনিষ্ঠা বুঝিতে হইবে।

स्वसाक्षात्प्रकाश्येभ्यो भिन्नः प्रकाशकत्वात्, यो यस्य प्रकाशकः स तस्मात् भिन्नः, यथा घटादालोको वृत्तिप्रकाश्यात् च वृत्तिरित्यनुमानेनाऽऽदावन्तर्दृश्येभ्यो बुद्धिवृत्तितदारूढ़ार्थेभ्यो विवेकतो बुद्धिसाक्षी सिध्यति। कसंकर्त् विरोधश्चाऽनुकूलस्तर्कः।

---

तथा प्रकृत्यादिभेदप्रतियोगिभूतानां प्रकृतितत्कार्य्याणां संख्यातीतत्वेन वैयक्तिकतया तेषां सर्व्वेषां जन्मशतैरपि ग्रहस्य दुष्करतया भेदज्ञानस्यानुपपत्त्या न विवेकख्यातेः सम्भवः, तदभावे च गगनकुसुमायितं मोक्षेणेति शङ्कते नन्वनन्तपदार्थानां विवेकज्ञानस्यैव सम्भवः, तदभावे च गगनकुसुमायितं मोक्षेणेति शङ्कते नन्वनन्तेत्यादिना। विवेकप्रतियोगिपदार्थानां भेदप्रतियोगिनां प्रकृत्यादीनाम्। दृश्यत्वेत्यादि। तथाहि विशेषरूपैः प्रतियोगिनां सर्व्वेषां ग्रहासम्भवेऽपि दृश्यत्वादिरूपेण सर्व्वदृश्यानुगतधर्म्मेण प्रतियोगिनां ग्रहः सम्भवति। तथाच दृश्यत्वावच्छिन्नप्रतियोगिताक प्रकृत्यादिभेदज्ञानस्य सुसम्भवतया न विवेकख्यातेरलीकत्वम् इति भावः। तदिदं दृश्यत्वं साक्षादात्मप्रकाश्यकत्वम्, परिणामित्वञ्च अवस्थितस्य धर्मिणः पूर्व्वधर्म्मविनिवृत्तौ धर्म्मान्तरापत्तिरिति। दृश्यत्वधर्म्मेण प्रतियोगिघटितभेदज्ञानस्य प्रकारं न्यायानुगतदिशा प्रतिपादयितुमाह—तथाहीत्यादि। स्वसाक्षात्प्रकाश्येभ्य दृश्यस्य दृश्येभ्य इत्यर्थः। साक्षादात्मप्रकाश्यत्वस्यैव दृश्यत्वानतिरेकस्य निरुक्तपूर्व्वत्वात्। प्रकृतस्थानीयन्यायविचारस्तु प्रसङ्गादुपस्थितोऽपि गौरवभिया परित्यज्यत इति।

---

১৪ অনু। এখন আপত্তি হইতেছে এই যে, বিবেক শব্দে যখন ভেদ অর্থ পাওয়া গেল, তখন বিবেক বা ভেদের প্রতিযোগী প্রকৃতি প্রভৃতি পদার্থের অনন্ততাহেতু প্রতিযোগীভূত সকল পদার্থের তত্তদ্‌ব্যক্তিস্বরূপে জ্ঞান কাহারও সম্ভব না হওয়ায় প্রতিযোগিজ্ঞানজন্য সর্ব্বপদার্থ বিবেকজ্ঞান আত্মাতে কিরূপে সুসম্ভব হইতে পারে? এবং তাহা হইলে বিবেকখ্যাতি মোক্ষেরই বা কারণ হয় কিরূপে?



তাহার উত্তর এই যে, প্রতিব্যক্তিরূপে উক্ত কারণে বিবেকজ্ঞান

**अत्र आत्मनि व्यभिचारवारणाय साक्षात्पदम् ; वृत्तिद्वारैवाऽऽत्मनः स्वविषयत्वात् । (१४)**

---

अत्र प्रतिज्ञाहेतूदाहरणानां त्रयाणामवयवानां न्यासस्तु प्रकृतवस्तुसाधनं त्र्यवयवो न्याय इत्येव मतमधिकृत्य । केचित्तु त्र्यवयवप्रदर्शनस्य उपलक्षणतया पञ्चावयवपरत्वं व्याचक्षते, सांख्यग्रन्थे 'पञ्चावयवयोगात् सुखसंवित्ति'रिति सूत्रेण पञ्चावयवन्यायस्यैव संसूचनात् । इति अनुमानेन उक्तानुमानस्थलीयन्यायप्रयोगेण इत्यर्थः । अनन्तरं त्र्यवयवस्यैव प्रदर्शितत्वेन अन्यथार्थासङ्गतेः । बुद्धिवृत्तितदारूढार्थेभ्य इति पञ्चम्यर्थः प्रतियोगित्वं, विविच्यत इति भेदप्रकारेणेत्यर्थः । सिध्यति ज्ञानविषयीभवति । तथाहि—आत्मा बुद्धिवृत्तितदारूढार्थप्रतियोगिकभेदवानिति बुद्धिसाक्षिणः सिद्ध्याकारः ।

ननु अगृहीतव्यभिचारस्य हेतोरेव साध्यसाधकतया प्रकृते को व्यभिचारशङ्का-विरोधीत्याशङ्कायामाह कथं कर्म्मेत्यादि । तथाहि यथा वह्निमान् धूमादित्यादौ धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादित्येवं कार्य्यकारणभावानुगृहीततर्केण धूमे वह्निव्यभिचारशङ्का निवर्त्त्यते, तथा प्रकृते प्रकाशकत्वं यदि स्वाश्रयप्रकाश्यभेद-व्यभिचारि स्यात् तदा स्वाश्रयप्रकाश्यकर्म्मकप्रकाशकर्तृत्वनियतं न स्यात् इति । यतः प्रकाशकत्वं स्वाश्रयप्रकाश्यकर्म्मकप्रकाशकर्तृत्वनियतं ततो न स्वाश्रयप्रकाश्यभेद-व্यभिचारि इति व्यभिचारशङ्काया निवृत्तिरिति ।

---

অসম্ভব হইলেও দৃশ্যত্ব ও পরিণামিত্বাদি সামান্যরূপে বিবেকজ্ঞান হইতে পারে বলিয়া আর উক্ত দোষ হইবে না। সামান্যরূপে বিবেকজ্ঞানের প্রকার এই যে, দ্রষ্টা পুরুষ স্বসাক্ষাৎপ্রকাশ্য (বুদ্ধিতত্ত্বাদি) হইতে ভিন্ন, যে হেতু উহাতে প্রকাশকত্ব আছে। যে যাহার প্রকাশক, সে তাহা হইতে ভিন্ন। যেমন ঘট হইতে আলোক ভিন্ন, বৃত্তিপ্রকাশ্য হইতে বৃত্তি ভিন্ন। এইরূপ অনুমান দ্বারা প্রথম অন্তর্দৃশ্য বুদ্ধিবৃত্তি ও

नन्वत्राऽनुमाने बुद्धिवृत्तिमात्रात् विवेकः सिध्यतु। तस्या एव साक्षादात्मदृश्यत्वात् न प्रकृत्यादिभ्य इति चेत् न; वृत्तीनामज्ञातसत्त्वाभावेन ह्यत्राऽनुमाने लाघवाद् वक्ष्यमाण-

---

भवत्यादि—अत्र साक्षात्पदाभावे स्वप्रकाश्यभेद एव साध्यः स्यात्, तथात्वे च वृत्तिद्वारा आत्मनः अपि आत्मप्रकाश्यतया स्वप्रकाश्यभेदरूपसाध्यस्य आत्मनि अभावेन व्यभिचारः सम्भवति। साक्षात्पदोपादाने च आत्मनो वृत्तिद्वारा एव आत्मप्रकाश्यत्वात् न साक्षात् स्वप्रकाश्यत्वमिति प्रकृतसाध्यसत्त्वम्।

(२५) अत्र अनुमाने इति। आत्मपक्षक-स्वसाक्षात्प्रकाश्यभेदसाध्यक प्रकाशकत्व-हेतुकप्रकृतानुमाने इत्यर्थः। बुद्धिवृत्तिमात्रात् केवलबुद्धिवृत्तेरित्यर्थः। विवेकः भेदः

---

তদারূঢ় বিষয় হইতে বিভিন্নরূপে বুদ্ধির প্রকাশক পুরুষ সিদ্ধ হয়। এস্থলে কর্ম্মকর্ত্তার বিরোধই অনুকূল তর্ক। অর্থাৎ আত্মা প্রকাশক ও বুদ্ধিবৃত্ত্যাদি প্রকাশ্য, যদি ঐ উভয় ভিন্ন না হয়, তবে প্রকাশ্যপ্রকাশক ভাব অসম্ভব হইয়া ওঠে ইত্যাদি।

এস্থলে আত্মাও বৃত্তিদ্বারা আত্মার প্রকাশ্য হয় বলিয়া উক্ত অনুমানে ব্যভিচার সম্ভাবনা হওয়ায় সাধ্যগর্ভে সাক্ষাৎ পদার্থ নিবেশ করা হইয়াছে। সাক্ষাৎ পদ থাকিলে আর উক্ত ব্যভিচারের আশঙ্কা নাই। কারণ আত্মা আত্মার সাক্ষাৎপ্রকাশ্য নহে; পরন্তু বৃত্তিদ্বারা পরম্পরায় প্রকাশ্য।

১৫ অনু। এখন এখানে আপত্তি হইতেছে এই যে, উক্ত অনুমানে বুদ্ধিবৃত্তিমাত্র হইতেই আত্মার বিবেক সিদ্ধ হইতে পারে, কারণ বুদ্ধি-বৃত্তিই সাক্ষাৎ আত্মপ্রকাশ্য, প্রকৃত্যাদি সাক্ষাৎ আত্মদৃশ্য নয় বলিয়া উহা হইতে কিরূপে আত্মার ভেদ সিদ্ধ হয়।

तर्कगणात् चाऽखिलवृत्तीनां द्रष्टा विभुकूटस्थनित्यैकज्ञान-स्वरूपतयैव सिध्यति (१५), यथा नैयायिकानां क्षितिः

---

सिध्यतु अनुमानविधेयताभाग् भवत्वित्यर्थः। तथाहि—केवलबुद्धिवृत्तिप्रतियोगिक-भेदस्यैव आत्मनि निरुक्तानुमानेन सिद्धेः मोक्षसाधनीभूतचैतन्यानुयोगिक-सकलजड़-प्रतियोगिकभेदज्ञानस्य निरुक्तानुमानेन अनुपपत्त्या अर्थान्तरमिति भावः।

बुद्धिवृत्तिमात्रादिति मात्रपदव्यवच्छेद्यमाह न प्रकृत्यादिभ्य इति। तथाहि—प्रकृत्यादीनां पदार्थानां वृत्तिद्वारा प्रकाश्यत्वेन साक्षात् स्वप्रकाश्यत्वविरहात् साक्षात् स्वप्रकाश्यत्वेन रूपेण प्रकृत्यादीनामसंग्रहात् आत्मनि प्रकृत्यादिभेदो नोपलभ्यत इति भावः। वृत्तीनामित्यादि—यदा यदा वृत्तयः समुत्पन्नाः, तदा तदा एव ता विज्ञाता भवन्ति, नहि वृत्तयः सत्यो न विज्ञायन्त इति दृष्टम्। तदुक्तं पतञ्जलिना 'सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वा'दिति। विभ्विति—तथाहि आत्मा यदि अणुः स्यात्, तदा सकलदेहव्यापिसुखादीनामनुपलब्धिः स्यादिति। यदि मध्यम-परिमाणः स्यात् अनित्यः स्यादित्याभ्यां तर्काभ्याम् आत्मनः अणुत्वं मध्यमपरिमाणत्वञ्च निरस्तमिति; अत एव विभुत्वमङ्गीकार्य्यं तथात्वे नोक्तदोषद्वयापात इति भावः।

---

সেস্থলে উত্তর এই যে, বৃত্তির অজ্ঞাত অবস্থায় সত্তা নাই। কারণ পাতঞ্জলসূত্রে দেখিতে পাওয়া যায় যে 'সদা জ্ঞাতাশ্চিত্ত-বৃত্তয়স্তৎপ্রভোঃ পুরুষস্যাপরিণামিত্বাৎ' ইতি। অর্থাৎ ক্ষিপ্তমূঢ়াদি অবস্থা যুক্ত চিত্ত পুরুষের বিষয়; উহা যদি শব্দাদির ন্যায় স্বসত্তা কালে অজ্ঞাত অবস্থায় বর্ত্তমান হয়, তবে চিত্তের তুল্য পুরুষও পরিণামী হইয়া ওঠে। এইজন্যই চিত্তবৃত্তি সর্ব্বদা একই রূপে জ্ঞাত হইয়া থাকে কদাচিৎ জ্ঞাত কদাচিৎ অজ্ঞাত নহে। অতএব উক্ত অনুমানে লাঘব এবং বক্ষ্যমাণ তর্কসমূহহেতু সকল বৃত্তির দ্রষ্টা বিভু কূটস্থ নিত্য একজ্ঞান- স্বরূপ সিদ্ধ হইয়া থাকে।

सकर्तृका कार्य्यत्वादित्यनुमाने लाघवात् कर्त्तुरेकत्वनित्यत्वादिकं तद्वत्। तत्र विभुत्वं परिच्छिन्नभिन्नत्वं कूटस्थत्वादिकं च परिणामिभिन्नत्वादिकमतो बुद्ध्यात्मनोर्दृग्दृश्यरूपतो विवेकग्रहे सति तदुत्तरानुमानेन परिणामित्वापरिणामित्वादिरूपैः सामान्यतोऽप्यात्मानात्मविवेकग्रहो घटत इति। अत एव पातञ्जले सत्त्वपुरुषान्यताख्यातिरेव मोक्षहेतुतया स्थले स्थले व्यासभाष्ये

---

(१६) यथेत्यादि—नैयायिका हि एकस्य नित्यस्य ईश्वरस्य साधनाय 'क्षितिः सकर्तृका कार्य्यत्वात्' इत्यनुमानं प्रयोजयन्ति। अत्र सकर्तृकत्वं साध्यम्, क्षितिः पक्षः, कार्य्यत्वं हेतुः। सकर्तृकत्वञ्च उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिजन्यत्वम्। द्व्यणुकरूपकार्य्यस्य उपादानकारणं परमाणुः तद्विषयकप्रत्यक्षञ्च नास्मदादीनाम् अस्मदीयजन्यप्रत्यक्षे महत्त्वस्य कारणतया परमाणोर्महत्त्वाभावेन तद्विषयकप्रत्यक्षासम्भवात्। अत एव तद्विषयकनित्यप्रत्यक्षविशेषाभ्युपगम आवश्यकः, तदाश्रयश्च परमेश्वर एव सिध्यति। परमेश्वरस्य अनेकत्वञ्च लाघवज्ञानानुग्रहेण बाधितमिति एकस्तथाविधः कर्त्ता सिद्धः।

न च शरीराजन्यत्वेन कर्त्तृजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यं अप्रयोजकत्वात्, प्रकृते तु कर्तृत्वेन कार्य्यत्वेन च कार्य्यकारणभाव एव अनुकूलतर्कः प्रयोजक इति। तथाहि—कार्य्यत्वं यदि कृतिमज्जन्यत्वव्यभिचारि स्यात् तदा कृतिमज्जन्यतावच्छेदकं

---

১৬। নৈয়ায়িকমতসিদ্ধ কার্য্যত্বহেতুক ক্ষিতি-পক্ষক সকর্ত্তৃকত্বানুমান উহার দৃষ্টান্ত। উক্ত অনুমানে লাঘবতই কর্ত্তার একত্ব ও নিত্যত্ব প্রভৃতি যেরূপ সিদ্ধ হয়, সেইরূপ পূর্ব্বোক্ত অনুমানে আত্মার বিভুত্ব কূটস্থত্ব নিত্যত্বাদি সিদ্ধ হইয়া থাকে। বিভুত্বপদের অর্থ পরিচ্ছিন্নভিন্নত্ব অর্থাৎ পরমমহৎপরিমাণবত্ত্ব। কূটস্থত্বাদিপদের অর্থ পরিণামিভিন্নত্বাদি।

प्रोक्ता। सत्त्वपुरुषान्यताख्यातिरूपदृग्दृश्यविवेकग्रहोत्तरं यथोक्तरीत्या प्रकृत्यादिविवेकग्रहात्। तत्र च सत्त्वशब्देन बुद्धिसत्त्वमुक्तमिति। एवं च प्रकृत्यादिपदार्थानां विशिष्य-ज्ञानाभावेऽपि तद्विवेकज्ञानं घटते। एतेन दृग्दृश्यविवेका-दविद्यानिवृत्तिरिति प्राचां प्रवादोऽप्युपपादितः (१६)।

---

न स्यात्। अस्ति च कार्य्यत्वावच्छिन्नं प्रति ज्ञातिमत्त्वेन कारणत्वमिति कार्य्यकारण-भावं सिद्धं कार्य्यत्वं ज्ञातिमज्जन्यतावच्छेदकमिति। दृगित्यादि—दृक् द्रष्टृस्वभाव आत्मा। दृश्यम् दृश्यस्वभावो जड़पदार्थः। तद्रूपेण विवेकग्रहे दृशः अनुयोगितया दृश्यस्य च प्रतियोगितया भेदग्रहे सति। तदुत्तरं सामान्यरूपेण परिणामित्वाद्यव-च्छिन्नभेदप्रकारकापरिणामित्वावच्छिन्नविशेष्यकभेदज्ञानं सम्भवतीति। सत्त्वपुरुषे-त्यादि—पातञ्जलसूत्रञ्च 'विवेकख्यातिरविप्लवा हानोपायः' इति। योगश्चित्तवृत्तिनिरोध इति सूत्रस्य भाष्ये च व्यासदेवानां वचनं यथा—'तदेव रजोलेशमलापेतं स्वरूप-प्रतिष्ठितं सत्त्वपुरुषान्यताख्यातिमात्रं धर्म्ममेघध्यानोपगं भवती'त्यादि।

अत एवेति—यतः सत्त्वपुरुषान्यताख्यातिरूपदृग्दृश्यविवेकग्रहादुत्तरं सामान्यतः प्रकृत्यादिभेदग्रह आत्मनि सम्भवति, तत एव इत्यर्थः। अन्यथा आत्मनि अनात्म-प्रकृत्याद्यभेदबुद्धिरूपस्याभिमानस्य निवृत्त्यसम्भवेन तथाभूतस्य मोक्षसाधनता न संगच्छत इति भावः।

---

অতএব বুদ্ধি এবং আত্মা এই দুইয়ের মধ্যে দ্রষ্টা ও দৃশ্যরূপে ভেদজ্ঞান সম্পন্ন হইলে তৎপর অনুমান দ্বারা পরিণামিত্ব ও অপরিণামিত্বাদি ধর্ম্ম-দ্বারা সামান্যরূপে আত্মা ও অনাত্মার বিবেকজ্ঞান সুসম্ভব হইয়া থাকে; এই জন্যই পাতঞ্জলসূত্রে ব্যাসভাষ্যের স্থলে স্থলে সত্ত্বপুরুষান্যতাখ্যাতি অর্থাৎ বুদ্ধি ও পুরুষের পরস্পর ভেদজ্ঞানকেই মোক্ষের হেতু বলা হইয়াছে। সত্ত্ব ও পুরুষের বিবেকজ্ঞানরূপ দ্রষ্টা ও দৃশ্য পদার্থের

किञ्चात्मा प्रकृतितत्कार्येभ्यो भिन्नोऽपरिणामित्वादित्या-
द्यनुमानैरपि सामान्यतो दृश्यविवेको द्रष्टरि सम्भवतीति। यत्
त्वाधुनिका वेदान्तिब्रुवा दृश्यत्वेनैव प्रकृत्यादीनां द्रष्टृत्वेन च
प्रकृत्याद्यखिलजडेभ्य आत्मविवेकं मन्यन्ते—

घटद्रष्टा घटाद्भिन्नः सर्वथा न घटो यथा।
देहद्रष्टा तथा देहो नाऽहमित्यादिरूपतः॥

---

(১৩) सत्त्वपुरुषान्यताख्यात्युत्तरं सामान्यतो विवेकख्यात्यैव अभिमाननिवृत्त्यभ्युपगमे गौरवदोषमापतितं परिहर्तुमन्यथानुमानमप्याह किञ्चेत्यादिना। तथाहि—निरुक्तरूपेण एकेनैवानुमानेन अभिमाननिवर्त्तकज्ञानसम्भवनात् न क्रमेण ज्ञानद्वयाङ्गीकारकृतं गौरवमिति भावः। आधुनिका वेदान्तिब्रुवा इति श्रीमच्छङ्कर-भगवत्पादाना-मधिक्षेपः, स्वमते अद्वैतवादस्य अनङ्गीकरणात् तदङ्गीकारप्रयुक्त एव। वेदान्तिब्रुवा इति वैदान्तिकम्मन्याः न तु वस्तुतो वेदान्ततत्त्वज्ञा इत्यर्थः। दृश्यत्वेनैवेत्यादि—तथाहि वेदान्तिकानाम् अद्वैतवादे आत्मनः स्वयम्प्रकाशत्वेन द्रष्टृत्वमात्रं न तु दृश्यत्वम्

---

বিবেকজ্ঞান হইলে অনন্তর যথোক্তরীতিক্রমে প্রকৃত্যাদির বিবেকজ্ঞান হইয়া থাকে। উক্ত পাতঞ্জলসূত্রে সত্ত্বশব্দে বুদ্ধিসত্ত্বই বলা হইয়াছে। উক্তরূপে প্রকৃত্যাদি পদার্থের বিশেষরূপে জ্ঞান না হইলেও প্রকৃত্যাদি-পদার্থের বিবেক জ্ঞান হইতে পারে। ইহাদ্বারা দ্রষ্টা ও দৃশ্য এই উভয়ের বিবেকজ্ঞান হইতেই অবিদ্যার নিবৃত্তি হয় এই প্রাচীন প্রবাদেরও উপপাদন করা হইয়াছে।

১৭ অনু। অন্যরূপেও আত্মাতে প্রকৃত্যাদিভেদ সিদ্ধ হইতে পারে।

যথা—'আত্মা অপরিণামী বলিয়া প্রকৃতি ও তৎকার্য্য হইতে ভিন্ন'

তত্ ন; 'আত্মা বাঽরে দ্রষ্টব্য ইত্যাদিশ্রুতিভিরাত্মনোঽপি দৃশ্যত্বাত্, সাক্ষাদ্ দৃশ্যত্ববিবক্ষয়া চ প্রকৃত্যাদেরসংগ্রহাত্ করণদ্বারৈব তদ্দর্শনাত্ (১৩)

---

আত্মভিন্নাশ্চ দৃশ্যাঃ পদার্থাঃ। তদেবং দ্রষ্টৃত্বেন আত্মনি দৃশ্যত্বেন চ প্রকৃত্যাদীনাং বিবেকগ্রহো ঘটত ইতি। ঘটদ্রষ্টেত্যাদি—অয়মিদং তত্ত্বমনুসন্ধেয়ম্ যো যদ্দ্রষ্টা স তস্মাদ্ভিন্নঃ যথা ঘটদ্রষ্টা ঘটাদ্ ভিন্নঃ। আত্মা চ দেহদ্রষ্টা তস্মাত্ আত্মা দেহো ন ইতি আত্মনি দেহভেদসিদ্ধ্যা আত্মনি দেহাভেদবুদ্ধিরূপমিথ্যাজ্ঞাননিবৃত্তিঃ সম্ভবতীতি ভাবঃ।

ঘটদ্রষ্টেত্যস্যার্থস্তু—ঘটদ্রষ্টা ঘটপ্রকাশকঃ আত্মা যথা ঘটাদ্ ভিন্নঃ ঘটাতিরিক্তঃ। সর্বথা সর্বৈব প্রকারেণ ন ঘটঃ ন ঘটাভিন্নঃ। তথা দেহদ্রষ্টা দেহাদের্ভাসকঃ আত্মা অহমিত্যাদিরূপতঃ দ্রষ্টৃত্বাদিরূপতঃ হেতোঃ. ন দেহঃ দেহভিন্ন ইত্যর্থঃ। তদিদং শ্রুতিপ্রমাণোপন্যাসেন নিষেধতি তন্নেতি। তথাহি দৃগ্দৃশ্যরূপেণ নাত্মবিবেকগ্রহঃ সুঘট ইতি ভাবঃ। তত্র চ হেতুমাহ আত্মনোঽপি দৃশ্যত্বাদিতি। অথ আত্মনো দৃশ্যত্বং কথমবধার্য্যত ইত্যাশঙ্কায়াং শ্রুতিং প্রমাণমুদাহরতি 'আত্মা বা' ইত্যাদি।

---

উক্ত অনুমানদ্বারা সামান্যরূপে দ্রষ্টা পুরুষে দৃশ্যপদার্থের বিবেকজ্ঞান সম্ভব হইয়া থাকে। আধুনিক বৈদান্তিকগণ যে দৃশ্যস্বরূপে প্রকৃত্যাদি পদার্থ হইতে আত্মার বিবেক সিদ্ধ হয় ইহা মনে করেন। যথা—যেমন ঘটদ্রষ্টা ঘট হইতে ভিন্ন উহা সর্ব্বথা ঘটস্বরূপ নহে। সেই রূপ দেহদ্রষ্টা পুরুষ দেহ স্বরূপ নহে কারণ অহং এই প্রতীতি দেহে হয় না, দেহভিন্ন অপর কোনও পদার্থ ইহার বিষয় হইয়া থাকে অতএব দৃশ্য ও দ্রষ্টৃরূপে উভয়ের ভেদ সিদ্ধ হয়। উক্ত মত সমীচীন নহে, কারণ 'আত্মা বারে দ্রষ্টব্যঃ' অর্থাৎ শ্রবণাদি ত্রিবিধ উপায়ে আত্মার দর্শন করিতে হইবে,

अथैवं कल्पनीयं,—आत्मनो वृत्तिव्याप्यत्वमेव दृश्यत्वं श्रुत्यादिभिर्विधीयते, न तु प्रकाश्यत्वरूपफलव्याप्यत्वम्, स्वयम्प्रकाशस्वरूपस्य प्रकाशापेक्षाविरहात्। अतोऽत्र दृश्यत्वं प्रकाश्यत्वं, तत् चाऽऽत्मनि नाऽस्तीति, तदपि तुच्छं; यथा ह्यहमित्यनुभूयमानोऽप्यात्मा चैतन्याख्यफलव्याप्यो न भवतीति भवद्भि-

---

तथा हि निरुक्तश्रुतिशतैरात्मनोऽपि दृश्यत्वलाभेन दृश्यत्वावच्छिन्नप्रतियोगिताकभेदस्य आत्मनि असत्त्वात् साध्यबाधेन हेतोर्बाधदोषग्रस्तत्वात् न प्रकृतसाध्यसाधको हेतुरिति भावः। ननु अस्ति आत्मनो दृश्यत्वं परं तत्र साक्षात्दृश्यत्वं वृत्तिद्वारैवात्मनः स्वविषयत्वादित्यस्य अनुपदमुक्तत्वात् अनुमानघटकीभूतं दृश्यत्वन्तु साक्षाद्दृश्यत्वरूपं विवक्ष्यते चेन्न दोष इत्याशङ्कामपि निषेधति साक्षादित्यादिना। करणद्वारेणेति वृत्तिद्वारा इत्यर्थः।

(१८) अथ दृश्यत्वस्य प्रकाश्यत्वरूपफलव्याप्यत्वरूपस्य पारिभाषिकस्य साध्यघटकत्वाभ्युपगमाददोष इत्युपपादयितुं पक्षान्तरमुपन्यस्यति अथैवमित्यादिना। वृत्तिव्याप्यत्वमिति आत्माकाराकारितान्तःकरणवृत्तिविषयत्वमित्यर्थः। 'आत्मा वारे द्रष्टव्यः' 'मनसैवानुद्रष्टव्यम्' इत्यादिभिः श्रुतिभिर्यदात्मनो दृश्यत्वमुक्तम्, तत् तादृशरूपमेव। प्रकाश्यत्वरूपफलव्याप्यत्वरूपं दृश्यत्वन्तु नात्मनि वर्त्तते;

---

এই অর্থে যে সকল শ্রুতি আছে, তাহা দ্বারা আত্মারও দৃশ্যত্ব প্রতিপাদিত হওয়ায় দৃশ্য পদার্থ হইতে আত্মার বিবেক সিদ্ধ হইতে পারে না। যদি দৃশ্যত্ব পদে সাক্ষাৎ দৃশ্যত্ব বলা হয়, তবে প্রকৃত্যাদি পদার্থেও উক্ত দৃশ্যত্ব থাকিতে পারে না, কারণ প্রকৃত্যাদি পদার্থ সাক্ষাৎ দৃশ্য নহে, বৃত্তি দ্বারা দৃশ্য ইহা পূর্ব্বেই প্রতিপাদন করা হইয়াছে।

১৮ অনু। এস্থলে যদি এই কল্পনা করা যায় যে শ্রুতিদ্বারা প্রতিপাদিত দৃশ্যত্ব বৃত্তিব্যাপ্যত্ব কিন্তু প্রকাশ্যত্বরূপ ফলব্যাপ্যত্ব নহে, কারণ

रुच्यते, तथैव बौद्धैरपीष्यते सुखदुःखादिमत्त्वेनाऽपि बुद्धिः स्वप्रकाशतया चैतन्यव्याप्या न भवतीति। तथा चाऽऽत्मनीव बुद्धावपि दृश्यत्वासिद्धया दृश्यत्वेन रूपेण बुद्धिविवेकोऽत्यन्तापेक्षितोऽपि न सिध्यतीति। भाष्यादिषु चाऽन्यान्यत्र दूषणान्युक्तानीति दिक् (१८)।

---

स्वयम्प्रकाशरूपस्य तस्य प्रकाशापेक्षाविरहादिति सून एव स्पष्टम्। 'यन्मनसा न मनुते' इत्यादिश्रुतयोऽपि तदेव फलव्याप्यत्वरूपं दृश्यत्वमधिकृत्य सम्प्रवृत्तमिति मन्तव्यम्। तदुक्तं पञ्चदशीकारैः 'फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्। ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता इति। आत्मनि वृत्तिव्याप्यत्वस्याप्यनङ्गीकारे आत्मविषयकाज्ञानस्य चिरमेवस्थानापत्त्या मोक्षस्य आकाशकुसुमायितत्वप्रसङ्गात्। तदेवं प्रकाश्यत्वलक्षणस्य दृश्यत्वस्य साध्यघटकतया उपादानेन नात्मनि बाध इति भावः। दृश्यत्वं हेतूकृत्य प्रकृत्यादौ आत्मभेदसाधने तु दृश्यत्वस्य हेतोर्व्यभिचारदोषापातः प्रागासीत् तस्य च आत्मावृत्तित्वोपपादनेन व्यभिचारो निरस्त इति भावः। तदपि तुच्छमिति—तदिति आत्मनि फलव्याप्यत्वाभावेन दृश्यत्वाभावसाधनमपीत्यर्थः। तुच्छत्वमेव तदेवोपपादयन्नाह यथाहीत्यादिना। अनुभूयमानोऽपीत्यनेन अनुभवविषयत्वप्रतिपादनात् फलव्याप्यत्वसम्भावना आत्मनि सूचिता। अत्यन्तापेक्षितोऽपीत्यादि—

---

স্বয়ম্প্রকাশরূপ আত্মার অপর প্রকাশের অপেক্ষা নাই। অতএব এস্থলে দৃশ্যত্ব পদের অর্থ প্রকাশ্যত্ব উহা আত্মাতে নাই, কাজেই দৃশ্য পদার্থ হইতে আত্মার বিবেক-সিদ্ধি অসম্ভব নহে। উক্ত মতও অসমীচীন; কারণ 'অহং' এইরূপে অনুভবের বিষয়ীভূত আত্মা যেরূপ চৈতন্যাখ্য ফলব্যাপ্ত হয় না ইহা তোমরা স্বীকার কর, সেইরূপই বৌদ্ধগণ বলেন যে, সুখ দুঃখাদি বিশিষ্টরূপে বুদ্ধি স্বপ্রকাশ বলিয়া চৈতন্যব্যাপ্ত হয় না। সেই

ननु सम्भवत्वेवं सामान्यरूपेण विवेकग्रहः सामान्यान्येव बहूनि सन्ति परिणामित्वसंहत्यकारित्वसुख-दुःखमोहात्मकत्व-चतुर्विंशतितत्त्वत्वादीन्यतस्तैस्तै रूपैर्विवेक-ग्रहाणां मोक्षहेतुत्वेऽननुगमदोष इति चेत् न। अभिमान-प्रतिबन्धकज्ञानत्वेनैवाऽनुगमादिति (१९)।

---

सत्त्वपुरुषान्यताख्यातेर्मोक्षसाधनतया दृश्यत्वेन रूपेण बुद्धौ पुरुषभेदस्य दुर्ग्रहत्वेन मोक्षसाधनसम्पत्तिविरहात् मोक्ष एव नोपपद्यत इति भट्टमुद्दिश्यम्। दृश्यत्वासिद्धेरि-त्यादि—तथाहि बौद्धनये बुद्धेस्तथात्वात् तन्मतानुसारेणैव तस्या दृश्यत्वमिति ध्येयम्।

(१९) सामान्यरूपेणेति परिणामित्वापरिणामित्वादिरूपेण इत्यर्थः। तैस्तैः रूपैरिति भिन्नपरिणामित्वादिरूपैरित्यर्थः। अननुगमदोष इति तथाहि परिणामित्व-रूपेण विवेकग्रहः मोक्षहेतुः संहत्यकारित्वरूपेण विवेकग्रहः मोक्षहेतुः सुखदुःख-मोहात्मकत्वेन वा विवेकग्रहस्य मोक्षहेतुरिति नानाविधकार्यकारणभावकल्पनाया आवश्यकत्वात् अनुगतरूपेण एककार्यकारणभावकल्पनासम्भवेन गौरवमेव अननुगमे दोषः स्वीकर्त्तव्यः।

---

হেতু আত্মার ন্যায় বুদ্ধিতেও দৃশ্যত্ব অসিদ্ধ হওয়ায় দৃশ্যস্বরূপে বুদ্ধি হইতে ভেদ অত্যান্ত আবশ্যক হইলেও উহার সিদ্ধি হইতে পারে না। এই সকল দোষ ভাষ্যাদিতে ও অন্যত্র উক্ত হইয়াছে।

১৯ অনু। এখন আপত্তি হইতেছে এই যে উক্তরূপে সামান্যতঃ বিবেকজ্ঞান সিদ্ধ হউক, তথাপি পরিণামিত্ব সংহত্যকারিত্ব সুখ দুঃখ মোহাত্মকত্ব চতুর্ব্বিংশতিতত্ত্বত্বাদি যে বহু সামান্য ধর্ম্ম আছে, উক্তরূপে বিবেকজ্ঞানকে মোক্ষের হেতু বলিলে অননুগম দোষ হইতে থাকে। তাহার উত্তর এই যে অভিমানপ্রতিবন্ধকজ্ঞানত্বরূপেই উক্ত নানারূপ বিবেক জ্ঞানের অনুগম হইতে পারে।

अथैवं सामान्यरूपेण विवेकस्यैव सर्वाभिमाननिवर्त्तकतया नाहं देहो नेन्द्रियाणीत्यादिप्रत्येकरूपैर्विवेकग्रहाणां मोक्षहेतुत्वं श्रुतिस्मृत्योरुच्यमानं कथं घटेतेति चेत् न। अवान्तरविवेकानां सामान्यविवेकप्रपञ्चमात्रत्वादिति ।

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे मोक्षहेतुविवेकज्ञानस्य स्वरूपस्य परिच्छेदः ॥२॥

---

अभिमानेत्यादि—यथाहि यथा—पक्षतायन्य साध्यनिश्चयनिवर्त्त्यसंशयत्वेन साध्यनिश्चयप्रतिबध्यानां संशयानां पक्षः साध्यवान् न वा साध्यं पक्षवृत्ति न वा साध्यं पक्षनिष्ठाभावप्रतियोगि नवा इत्यादिकानामेकेन साध्यनिश्चयनिवर्त्त्यत्वेन रूपेण पक्षतात्वम्, तथैव प्रकृतेऽपि परिणामित्वादिधर्म्माणां सर्व्वेषामेव प्रत्येकं ज्ञानस्य अभिमानप्रतिबन्धकत्वाभ्युपगमात् तादृशज्ञानत्वमेव तादृशसकलज्ञानानुगतो धर्म्म इति नाननुगमदोष इति भावः ।

इति द्वितीयपरिच्छेदटीका समाप्ता ॥२

---

২০ অনু। যদি এস্থলে আপত্তি হয় যে, যদি সামান্তরূপে বিবেকজ্ঞানই সকল অভিমানের নিবর্ত্তক হয়, তবে 'আত্মা দেহ নহে' 'আত্মা ইন্দ্রিয় নহে' ইত্যাদি প্রত্যেকরূপে বিবেকজ্ঞান কিরূপে মোক্ষের হেতু বলিয়া শ্রুত্যাদি দ্বারা প্রতিপাদিত হয়? তাহার উত্তর এই যে, বিশেষ বিশেষ বিবেকজ্ঞান সামান্য বিবেকের বিবরণরূপে শ্রুত্যাদিতে নিরুক্ত হইয়াছে।

ইতি সাংখ্যসারের দ্বিতীয় পরিচ্ছেদের অনুবাদ সমাপ্ত ॥ ২

# अथ तृतीयः परिच्छेदः।

अथ के ते प्रकृत्यादयो येभ्यः पुरुषो विवेचनीय इत्युच्यते—

प्रकृतिर्बुद्ध्यहङ्कारौ तन्मात्रैकादशेन्द्रियम्।
भूतानि चेति सामान्याच् चतुर्विंशतिरेव ते॥

एतेष्वेव धर्म्मधर्म्म्यभेदेन गुणकर्म्मसामान्यानामन्तर्भावः (१)।

---

(१) नापृष्टः कस्यचिद् ब्रूयादिति शास्त्रानुगतिमनुरुध्य प्रकृते प्रश्नस्तु दर्शयति अथेत्यादिना। अथेत्यनेन सङ्गतिरपि प्रदर्शिता भवति। विवेचनीय इति भेदेन प्रत्यक्षविषयीकर्त्तव्यः, पुरुषधर्म्मिकप्रकृत्यादिप्रतियोगिकभेदप्रत्यक्षस्य योगबललभ्यस्यैव मोक्षसाधनत्वाभ्युदगमादिति बुद्ध्यहङ्कारेण महत्तत्त्वाहङ्कारतत्त्वे। तन्मात्राणि गन्धादीनि च पञ्च तन्मात्राणि एकादशेन्द्रियाणि च पञ्च ज्ञानेन्द्रियाणि पञ्च कर्म्मेन्द्रियाणि एकमन्तःकरणं मनश्च इति। समाहारद्वन्द्वे एकत्वम्। भूतानि क्षित्यादीनि पञ्च। सामान्यादिति सामान्यरूपेणेत्यर्थः। विशेषविवक्षायान्तु अतिरिक्तान्यपि अक्ष्यवदनानि इति भावः।

ननु गुणकर्म्मादयोऽपि अतिरिक्ताः पदार्था वैशेषिकादिभिरभ्युपगताः अस्मिन्नपि अस्थाने तेषामपोहितुमशक्यतया चतुर्व्विंशतिसंख्याव्याघात इत्याशङ्कायामाह एतेष्वेवेत्यादि। तथाहि अस्मिन् मते धर्म्मधर्म्मिणोरभेदात् द्रव्यवृत्तीनां गुणादीनां द्रव्यसमुद्देशादेव लब्धसमुद्देशत्वाद्अतिरिक्ततत्त्वापत्तिदोषो न स्यादिति भावः। गुणा रूपादयः, कर्म्माणि उत्क्षेपणादीनि सामान्यानि द्रव्यत्वादिजातय इत्यर्थः।

---

১ অনু। যাহা হইতে পুরুষের ভেদজ্ঞান করা আবশ্যক, সেই সকল প্রকৃত্যাদি কি? ইহার উত্তরে বলিতেছেন,—প্রকৃতি, বুদ্ধি, অহঙ্কার, পঞ্চ তন্মাত্র, একাদশ ইন্দ্রিয় এবং পঞ্চ মহাভূত এই চতুর্ব্বিংশতি পদার্থ ই প্রকৃত্যাদি পদে গ্রাহ্য। ধর্ম্ম এবং ধর্ম্মীর অভেদ-বিবক্ষায় এই চতু-

तत्र प्रकृतित्वं साक्षात्परम्परयाखिलविकारोपादानत्वं, प्रकृष्टा कृतिः परिणामरूपाऽस्या इति व्युत्पत्तेः।

प्रकृतिः शक्तिरजा प्रधानमव्यक्तं तमो मायाऽविद्येत्यादयः प्रकृतेः पर्य्यायाः।

शक्तिरिति विद्याऽविद्येति मायेति च तथा परे।
प्रकृतिश्च परा चेति वदन्ति परमर्षयः॥ इति स्मृतेः (२)।

---

(२) तत्रेत्यादि।—तत्र प्रकृत्यादौ, घटकत्वं सप्तम्यर्थः। प्रकृत्यादिघटकीभूतं प्रकृतित्वमित्यर्थः। महत्तत्त्वं प्रति प्रकृतेः साक्षादुपादानतया अहङ्कारादिकं प्रति च परम्परया उपादानत्वेन असम्भववारणाय साक्षात् परम्परयेति दलद्वयनिवेशः। साक्षात् परम्परया वा प्रकृतेरखिलविकारोपादानत्वस्य अभिव्यक्तेरिति। अथ कथञ्चित् प्रकृतिशब्द-व्युत्पत्तिमभिधत्ते प्रकृष्टेत्यादिना। अथ दर्शनान्तरप्रसिद्धाः शक्तिमायाविद्याप्रभृतयः किमिति नाभ्युपगम्यन्ते, तेषामपि पदार्थानां श्रुत्यादिसिद्धत्वात् इत्याशङ्कायां शक्ति-प्रभृत्यभिधानानि एतन्नामविशेषा एव इति समाधत्ते प्रकृतिरित्यादिना। गुणकर्म्मादीनां धर्म्माणां धर्म्म्यभेदे युक्तिरेवं स्यात्, तथाहि—गुण्यादिकमन्तरेण कदाचिदपि गुणादीना-मसत्त्वेन गुण्यादिकमपहाय गुणादीनां प्रतीतेरसम्भवेन च तदुभयाभेद एव युज्यत इति भावः। केचित्तु 'शुक्लः पटः, चलः घटः, गौः इत्यादिप्रतीत्या गुणादिसामानाधि-करण्यस्य अवगाहनात् धर्म्मधर्म्मिणोरभेद इत्याहुः।

---

র্ব্বিংশতি পদার্থের মধ্যেই গুণ কর্ম্ম ও সামান্য পদার্থের অন্তর্ভাব জানিবে। (কাজেই অধিক তত্ত্বের আশঙ্কা নাই)।

২ অনু। তন্মধ্যে সাক্ষাৎ বা পরম্পরায় সকল বিকার পদার্থের উপাদান কারণকে প্রকৃতি বলে। প্রকৃতি বুদ্ধিতত্ত্বের প্রতি সাক্ষাৎ উপাদান কারণ ও অহঙ্কারাদিতত্ত্বের প্রতি পরম্পরায় উপাদান কারণ। এই প্রকৃতির পরিণামরূপা কৃতি উৎকৃষ্ট এইজন্য উহাকে প্রকৃতি বলা হয় ও উক্তরূপ লক্ষণ পাওয়া যায়। উহা সকল বিকারের

सा च साम्यावस्थयोपलक्षितं सत्त्वादिद्रव्यत्रयम्। कार्य्य-सत्त्वादिवारणायोपलक्षितान्तम्।

साम्यावस्था च न्यूनाधिकभावेनाऽसंहननावस्था अकार्या-वस्थेति यावत्। महदादिकं तु 'कार्य्यसत्त्वादिकं न कदाऽप्य-कार्य्यावस्थं भवतीति तद्व्यावृत्तिः। वैषम्यावस्थायामपि प्रकृतित्वसिद्धये उपलक्षितमित्युक्तम्। अकार्य्यमिति तूपलक्षि-तान्तस्य निष्कृष्टार्थः। सत्त्वादिगुणवती सत्त्वाद्यतिरिक्ता प्रकृतिरिति न शङ्कनीयम्; 'सत्त्वादीनामतद्धर्म्मत्वं तद्रूप-

(२) सा चेति प्रकृतिरित्यर्थः। उद्देश्यप्राधान्येन स्त्रीत्वम्। उपलक्षितमिति—प्रति-योगिव्यधिकरण-तद्वृत्तिविरहाप्रतियोगितत्कमित्यर्थः। एवं सति यदा कदाचित् साम्या-वस्थायाः सत्त्वयैव निरुक्तलक्षणं समन्वितं भवतीति भावः। साम्यावस्थयेति न्यूनाधिक-भावेनामिलितावस्थया अकार्य्यावस्थयेति यावत्। सत्त्वादीत्यादिपदेन रजस्तमसोः परि-ग्रहः। कार्य्येत्यादि—अकार्य्यावस्थं सत्त्वादिद्रव्यत्रयम् प्रकृतिः, कार्य्यावस्थञ्च सत्त्वादि-द्रव्यत्रयं महत्तत्त्वादिकं सर्व्वं, सर्व्वस्यैव कार्य्यवस्तुनः प्रस्थानेऽस्मिन् त्रिगुणात्मकत्वव्यव-स्थितेः। अत एव केवलविशेष्यदलसन्निवेशे महत्तत्त्वादेरपि सत्त्वादिद्रव्यत्रयात्मक-त्वेनातिप्रसङ्गप्रसङ्ग इति उपलक्षितान्तविशेषणमपि। एवञ्च महत्तत्त्वादेः सर्व्वदैव कार्य्या-वस्थतया विशेषणधर्म्माभावात् न क्षतिरिति। ननु उपलक्षितत्वं नाम प्रतियोगिव्यधि-करणतद्वृत्ति विरहाप्रतियोगितत्कत्वं प्रतियोगिव्यधिकरणतदभावाभाववत्त्वं वा, तद्-

উপাদান কারণ বলিয়াই উহার অপর তত্ত্ব অপেক্ষা উৎকর্ষ। প্রকৃতি, শক্তি, অজা, প্রধান, অব্যক্ত, তমঃ, মায়া ও অবিদ্যা প্রভৃতি প্রকৃতির পর্য্যায়শব্দ। শাস্ত্রে উক্ত আছে যে, 'কেহ প্রকৃতিকে ব্রাহ্মী, কেহ বিদ্যা, কেহ অবিদ্যা মায়া, কেহ পরা প্রকৃতি এইরূপ বলিয়া থাকেন।'

৩। সাম্যাবস্থাদ্বারা উপলক্ষিত সত্ত্ব রজঃ ও তমঃ এই গুণত্রয়ই সেই প্রকৃতি। কার্য্যাবস্থাপন্ন সত্ত্ব রজঃ ও তমঃ এই গুণত্রয়ের বারণার্থ

त्वा'दिति सांख्यसूत्रेण सत्त्वादीनां प्रकृतिस्वरूपत्वहेतुना प्रकृति-धर्मत्वप्रतिषेधात्, योगसूत्रतद्भाष्याभ्यामपि गुणानामेव प्रकृतित्व-वचनाच्च, गुणेभ्य एव कार्य्योत्पत्तौ तदन्यप्रकृतिकल्पना-वैयर्थ्याच्च। प्रकृतेर्गुणा इत्यादिवाक्यं तु वनस्य वृक्षा इतिवद् बोध्यम्। (३)

'सत्त्व' रजस्तम इति प्रकृतेरभवन् गुणाः'। इति सत्त्वादीनां प्रकृतिकार्यत्ववचनं तु गुणनित्यतावाक्यविरोधेन महत्तत्त्व-कारणीभूतकार्यसत्त्वादिपरमेव। महदादिसृष्टिर्हि गुणवैष-

---

पेच्चया लाघवेन साम्यावस्थायुक्तमिति विशेषणदानेनैव कार्य्यसत्त्वादिवारणसम्भवात् किमिति गुरुतरविशेषणमुपादाय तन्निरासेन इत्याशङ्कायामाह वैषम्येत्यादि। सत्त्वा-दीनामतद्धर्मत्वमित्यादि ;—तथाहि 'सत्त्वादिगुणानां प्रकृतिधर्मत्वं नास्ति प्रकृति-स्वरूपत्वादित्यर्थः। यद्यपि श्रुतिस्मृतिषु उभयमेव श्रूयते, तथापि तर्कतः स्वरूपत्व-मेवावधार्य्यते। न तु धर्मत्वम्। तथाहि—सत्त्वादित्रयं किं प्रकृतेः कार्य्यरूपो धर्मः, अथवाकाशस्य वायुवत् संयोगमात्रेण नित्य एव धर्मः स्यात्। आद्ये एकस्या एव प्रकृतेः द्रव्यान्तरसङ्गं विना विचित्रगुणत्रयोत्पत्त्यसम्भवः, दृष्टविरुद्धकल्पना-नौचित्यञ्च। अन्त्ये नित्येभ्य एव सत्त्वादिभ्योऽन्योन्यसङ्गेन विचित्रसकलकार्य्योपपत्तौ

---

উপলক্ষিত পর্য্যন্ত বলা হইয়াছে। অর্থাৎ কার্য্যাবস্থাপন্ন সত্ত্বাদিগুণত্রয় কদাচিৎ সাম্যাবস্থাযুক্ত হয় না বলিয়া উহার বারণ হইল। ন্যূনাধিক-ভাবে অসংহত অবস্থা বা অকার্য্যাবস্থাকে সাম্যাবস্থা বলা হয়। মহৎ তত্ত্বাদিরূপ কার্য্যসত্ত্বাদি কখনও কার্য্যাবস্থাশূন্য হয় না, এইজন্য উহার ব্যাবর্ত্তন হইল। বৈষম্যাবস্থাপন্ন কারণসত্ত্বাদির প্রকৃতিত্বসিদ্ধির জন্যও উপলক্ষিতান্ত বলা হইয়াছে। কার্য্যাবস্থাশূন্য ইহাই উপলক্ষিতান্তভাগের নিষ্কৃষ্ট অর্থ। প্রকৃতি সত্ত্বাদিগুণত্রয়স্বরূপ নহে; কিন্তু সত্ত্বাদি গুণের আশ্রয়—ইহা আশঙ্কা করা উচিত নহে।—কারণ "সত্ত্বাদীনামতদ্ধর্ম্মত্বম্'

स्यात् श्रूयते। तच्च वैषम्यं सजातीयसवलनेन गुणान्तरव्यावृत्तप्रकाशादिफलोपहितः सत्त्वादिव्यवहारयोग्यः परिणाम इति। एतेनाऽष्टात्रिंशतितत्त्वपक्षोऽप्युपपादितो मन्तव्यः (४)।

---

तदतिरिक्तप्रकृतिकल्पनानैयर्थ्यमिति। सत्त्वादीनां प्रकृतिकार्यत्वादिवचनानि चांशतः प्रकाशादिकार्योपहिततयाभिव्यक्त्यादिकमेव बोधयन्ति। यथा पृथिवीतो व्रीहीत्पत्तिरिति विज्ञानभिक्षुसम्मतः सूत्रार्थः। तथाहि—यद्‌ यत्स्वरूपं नहि तत् तद्वदपि भवितुमर्हति इति उपपत्तिः।

ननु यदि प्रकृतिर्गुणत्रयात्मकैव तदा प्रकृतेर्गुणा इति भेदव्यवहारः कथमुपपद्यतामित्याशङ्कायामाह प्रकृतेरित्यादि। तथाहि—यथा वनस्य वृक्षसमष्ट्यनतिरिक्तत्वेऽपि समूहसमूहिभावसम्बन्धप्रयुक्तो भेदव्यपदेशः, तथैव प्रकृतेऽपि इति भावः। अथवा भेदव्यपदेशोऽयं न पारमार्थिकः, परमौपचारिक एवेति ध्येयम्।

(४) अथ प्रकृतेर्गुणा इति व्यवहारस्य कथञ्चित् उपपादनेऽपि 'सत्त्वं रजस्तम इति प्रकृतेरभवन् गुणा' इति वचनेन 'भुवः प्रभव' इति सूत्रानुशिष्टया प्रकृतेरिति पञ्चम्या प्रकृतौ गुणकारणत्वप्रत्ययस्य का गतिरित्याकाङ्क्षायामाह—सत्त्वमित्यादि। गुणनित्यतावाक्येति—गुणानां सत्त्वरजस्तमसां नित्यताप्रतिपादकवचनेत्यर्थः। तथाहि—यदि निरुक्तवाक्यस्य प्रकृतौ गुणकारणत्वरूपो यथाश्रुतोऽर्थः परिगृह्यते, तदा गुणानां नित्यताप्रतिपादकवचनस्य तदर्थविरुद्धार्थप्रतिपादकतया विरुद्धार्थप्रतिपादकत्वरूपो वचनगतविरोधः प्रसज्येत, अत एव तद्विरोधप्रसङ्गनिराकरणाय गुणपदेन कार्यसत्त्वमेव विवक्षणीयमिति भावः।

---

ইত্যাদি সাংখ্যসূত্রদ্বারা সত্ত্বাদিগুণের প্রকৃতিস্বরূপত্বহেতু উপন্যাস করিয়া প্রকৃতিধর্মত্ব অর্থাৎ প্রকৃতিবৃত্তিত্ব প্রতিষেধ করা হইয়াছে। এবং যোগসূত্র ও যোগসূত্রের ভাষ্যদ্বারা সত্ত্বাদিগুণকেই প্রকৃতি বলা হইয়াছে। আরও গুণ হইতেই কার্য্যের উৎপত্তি সম্ভব হওয়ায় গুণ হইতে অতিরিক্ত প্রকৃতি কল্পনা ব্যর্থ হয়।

वैषम्य एव सत्त्वादिव्यवहारस्य श्रुतौ दृश्यते। यथा 'तम एवेदमग्र आस, तत्परेणेरितं विषमत्वं प्रयात्येतद्वै रजसो रूपं, तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद्वै सत्त्वस्य रूपम्' इति। सत्त्वादित्रयं च सुखप्रकाशलाघवप्रसादादिगुणवत्तया संयोगविभागादिमत्तयाऽनाश्रितत्वोपादानत्वादिना च द्रव्यत्वेऽपि

---

एवञ्च त्रिविधं कार्य्यसत्त्वादि महत्तत्त्वकारणीभूतमङ्गीक्रियते, कार्य्यं सत्त्वं कार्य्यं रजः कार्य्यं तमश्चेति। सत्त्वगुणप्रधानमहत्तत्त्वे कार्य्यसत्त्वं रजोगुणप्रधानमहत्तत्त्वे कार्य्यरजः तमोगुणप्रधानमहत्तत्त्वे कार्य्यतमः कारणं भवति। कार्य्यसत्त्वादीनां त्रयाणां प्रत्येकं गुणत्रयात्मकत्वेऽपि सत्त्वादीनामेकैकप्राधान्यवत्तया तथा व्यवहार इति बोध्यम्। एवञ्च कार्य्यसत्त्वादिकमादाय अष्टाविंशतितत्त्वानि वेदितव्यानि। सांख्यप्रवचनभाष्यग्रन्थे सुस्पष्टमिदमनुसन्धेयम्। अत एव स्वग्रन्थ एव वक्ष्यते अष्टाविंशतितत्त्वपक्ष इत्यादि।

(५) विषमावस्थायां सत्त्वादिव्यवहारे किं मानमिति आकाङ्क्षायामाह—वैषम्य एवेत्यादि। सत्त्वादित्रयमित्यादि। सुखादयः प्रसादान्ताः सर्व्वे गुणाः सत्त्वस्य।

---

প্রকৃতির গুণ এইরূপ উক্তিদ্বারা সাধারণতঃ প্রকৃতি ও গুণ বিভিন্ন প্রতীত হইলেও বনের বৃক্ষ এইরূপ উক্তিস্থলে যেমন বন বৃক্ষের সমষ্টি রূপ হইলেও ঔপচারিক ভেদ-ব্যবহার হয়, সেইরূপ প্রকৃতির গুণ এইরূপ উক্তিও ঔপচারিক ভেদ অবলম্বন করিয়া জানিবে।

৪ অনু। 'সত্ত্ব রজঃ ও তমঃ এই তিনটী গুণ প্রকৃতি হইতে উৎপন্ন হইয়াছে' ইহাদ্বারা যে সত্ত্বাদির প্রকৃতিকার্য্যত্ব উক্ত হয়, উহার সহিত গুণের নিত্যতাবোধক বাক্যের বিরোধ হয় বলিয়া উক্ত বাক্য মহত্তত্ত্বাদিকারণীভুত কার্য্যসত্ত্বাদিপর জানিবে। মহত্তত্ত্বাদির সৃষ্টি গুণের বৈষম্য হেতু হইয়া থাকে, ইহা শাস্ত্রে পাওয়া যায়। উক্ত বৈষম্য সজাতীয়-সম্পর্কহেতু অপর গুণ হইতে ব্যাবৃত্ত প্রকাশাদিফলযুক্ত সত্ত্বাদিব্যবহার-যোগ্য পরিণামবিশেষ। উক্তপ্রকারে মতান্তরসিদ্ধ অষ্টাবিংশতিতত্ত্ব উপপাদিত জানিবে।

पुरुषोपकरणत्वात् पुरुषबन्धकत्वाच्च गुणशब्देनोच्यते। इन्द्रियादिवत् (५)। गुणानां सुखदुःखमोहात्मकत्वप्रवादस्तु धर्मधर्म्मभेदात्; मनसः सङ्कल्पात्मकत्ववत्। तत्र सत्त्वं सुखप्रसादप्रकाशाद्यनेकधर्मकं प्राधान्यतस्तु सुखात्मकमुच्यते।

---

गुणवत्त्वेति द्रव्यत्वे हेतुरुपन्यस्तः। संयोगविभागावपि गुणविशेषावेव। अनाश्रितत्वम् अहत्तित्वं, तदपि द्रव्यत्वे हेतुर्भवितुमर्हति, द्रव्यभिन्नानां गुणकर्म्मादीनां सर्व्वेषामेव द्रव्याद्यनाश्रितत्वस्य असम्भवात्। नित्यद्रव्यमात्रस्यैव अनाश्रितत्वस्य शास्त्रकारैरभ्युपगमात्; तदुक्तं कारिकावल्यां विश्वनाथेन,—'अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते' इति। उपादानत्वं समवायिकारणत्वं, तदपि धर्म्मो द्रव्यमात्रस्यैव। तदुक्तं 'समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम्'। पुरुषोपकरणत्वादिति परमपुरुषार्थं प्रति परम्परया हेतुभूतानां महत्तत्त्वादीनां निर्म्माणद्वारा पुरुषोपकारशतसम्पादकत्वादित्यर्थः।

(६) ननु यदि सत्त्वादीनां निरुक्तकारणेन गुणत्वं, न तु सुखादिरूपगुणस्वरूपत्वेन, तदा कथं द्रव्यस्यापि तस्य सुखादिस्वरूपत्वोक्तिः सुसङ्गच्छतामित्यत आह गुणानामित्यादि। धर्म्मधर्म्मभेदादिति। गुणगुणिनोरभेदादित्यर्थः। तथाहि—सत्त्वादित्रयस्य

---

৫ অনু। বৈষম্যস্থলেই সত্ত্বাদিব্যবহার শ্রুতিতে দেখা যায়। যথা—'অগ্রে একমাত্র তমোগুণ অবস্থিত ছিল, উক্ত তমোগুণ পরপ্রযুক্ত বৈষম্য প্রাপ্ত হইয়া রজোরূপে পরিণত হয়; উহা আবার বৈষম্য প্রাপ্ত হইয়া সত্ত্বরূপে পরিণত হয়।' সত্ত্বাদিগুণত্রয় সুখ প্রকাশ লাঘব প্রসাদ প্রভৃতি গুণযুক্ত সংযোগবিভাগাদিযুক্ত অনাশ্রিত ও উপাদানকারণ বলিয়া দ্রব্যরূপে সিদ্ধ হইলেও পুরুষের পক্ষে উপকারক ও পুরুষবন্ধসাধক বলিয়া গুণনামে কথিত হইয়া থাকে। যেমন ইন্দ্রিয়গুলি পুরুষের ভোগসাধক বলিয়া পুরুষের গুণ বলিয়া ব্যবহৃত হয়।

৬ অনু। সংকল্প মনের বৃত্তি হইলেও যেমন মনকে সংকল্পাত্মক বলা হয়, সেইরূপ সুখ দুঃখ ও মোহ সত্ত্বাদিগুণের ধর্ম্ম হইলেও ধর্ম্ম ও ধর্ম্মীর

एवं रजोऽपि दुःख-कालुष्य-प्रवृत्त्याद्यनेकधर्म्मकं प्राधान्यतस्तु दुःखात्मकमुच्यते। तथा तमोऽपि मोहावरणस्तम्भनाद्यनेकधर्म्मकं प्राधान्यतस्तु मोहात्मकमुच्यते। त एव धर्मास्तेषां लक्षणानि भवन्ति (६)। सत्त्वादिसञ्ज्ञा चाऽन्वर्था। सतो भावः सत्त्वमुत्तमत्वमिति व्युत्पत्त्या हि धर्मप्राधान्येनोत्तमं पुरुषोपकरणं सत्त्वशब्दार्थः। मध्यमं च रजःशब्दार्थो रागयोगात्। अधमं च तमःशब्दार्थः; अधर्मावरणयोगात्। तानि च सत्त्वादीनि प्रत्येकमसंख्यव्यक्तयः; लघुत्वादिधर्मैरन्योन्य-

---

द्रव्यत्वेऽपि तदाश्रितसुखादिस्वरूपत्वमुपचरितमुपादाय सुखाद्यात्मकत्वोक्तिर्नासङ्गता भवतीति भावः। तत्र सत्त्वमित्यादि,— प्राधान्येन व्यपदेशा भवन्तीति न्यायेन सुखभिन्न-प्रसादादिधर्म्माणां तत्र तत्र सत्त्वेन सुखादित्रयस्यैव यथायथं त्रिषु प्राधान्यमधिकृत्य सुखात्मकत्वादिकं व्यवह्रियत इति भावः।

त एवेत्यादि।—त एवेति सुखादय इत्यर्थः। तेषां सत्त्वादीनाम्। लक्षणानि इतरव्यावर्त्तकधर्म्माः असाधारणधर्म्मा इति यावत्। तथाहि—सुखात्मकत्वं सत्त्वत्वं दुःखात्मकत्वं रजस्त्वं मोहात्मकत्वं तमस्त्वम्।

(७) अन्वर्था इति अर्थमनुगता सार्थिकेत्यर्थः। मध्यमञ्चेति पुरुषापकरणमिति शेषः। अधममित्यत्रापि पुरुषोपकरणमित्यनुषज्यते। असंख्यव्यक्तय इति नत्वेकैक-व्यक्तिरित्यर्थः। तथाहि—यदि सत्त्वादिरेकैकव्यक्तिः स्यात् तदा लघुत्वादिधर्म्माणा-

---

অভেদহেতু উহাকে সুখাদিস্বরূপ বলা হইয়া থাকে। তন্মধ্যে সত্বগুণের ধর্ম্ম সুখ প্রসাদ ও প্রকাশাদি; কিন্তু প্রধানতঃ উহাকে সুখাত্মক বলা হয়। এইরূপ রজোগুণের দুঃখ কালুষ্য ও প্রবৃত্ত্যাদি বহু ধর্ম্ম হইলেও প্রধানতঃ উহাকে দুঃখাত্মক বলা হয়। সেইরূপ তমোগুণের মোহ আবরণ স্তম্ভনাদি বহু ধর্ম্ম হইলেও প্রধানতঃ উহাকে মোহাত্মক বলা হয়। উক্ত সুখ দুঃখ ও মোহই উহার বিভিন্ন লক্ষণ হইয়া থাকে।

साधर्म्यं वैधर्म्यं च गुणानामिति सांख्यसूत्रात्। अत्र हि सूत्रे लघुत्वादिना बहूनां सत्वानां साधर्म्यं, तेनैव रजस्तमोभ्यां वैधर्म्यम्, एवं चलत्वादिना गुरुत्वादिना च बहूनां रजसां बहूनां च तमसां तदुभयमुक्तमिति। किञ्च यदि सत्वादित्रयमेकैकव्यक्तिरेव स्यात्, तत् त्रयं विभ्वेव वक्तव्यम्; एकदाऽनेकब्रह्माण्डादिसृष्टिश्रवणात्। तथा च कार्य्याणामनन्तवैचित्र्यं न घटते। न च संयोगवैचित्र्याद् वैचित्र्यं स्यादिति वाच्यम्। विभूनां त्रयाणां गुणानां स्वतः संयोगवैचित्र्यासम्भवात्। द्रव्यान्तरस्य चाऽवच्छेदकीभूतस्याऽ-

मैकैकत्वैव विश्रामेण तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वलक्षणं साधर्म्यं सत्त्वादौ नोपपद्यते, बहुत्वे च तदुपपत्तेः सत्त्वादिकं बहु एव अङ्गीकर्त्तव्यम्।

विभ्वेति। विभुत्वं सर्व्वमूर्त्तसंयोगानुयोगित्वम् परममहत्परिमाणशालित्वमिति यावत्। तत्त्रयस्य अविभुत्वे नानास्थानगतानेकब्रह्माण्डादिरूपेण तत्परिणतिः कथमुपपद्यतामिति भावः।

स्वत इति अन्यानपेक्षयेत्यर्थः। तथाहि विभुस्वरूपस्य तत्त्रयस्य निरवयवत्वादिधर्म्मकतया संयोगवैचित्र्यमनुपपन्नमिति भावः। ननु तस्य द्रव्यत्रयस्य विभुत्वेन

৭ অনু। সত্ত্বাদিগুণের সত্ত্বাদিসংজ্ঞা অন্বর্থসংজ্ঞা। সতের ভাব সত্ত্ব, অর্থাৎ উত্তমত্ব এইরূপ ব্যুৎপত্তিদ্বারা ধর্ম্মপ্রাধান্যে উত্তম পুরুষোপকরণই সত্ত্বশব্দের অর্থ। রাগযোগহেতু মধ্যম পুরুষোপকরণ রজঃশব্দার্থ। অধর্ম্মাবরণযোগহেতু অধম পুরুষোপকরণই তমঃশব্দার্থ।

উক্ত সত্ত্ব রজঃ ও তমোগুণ প্রত্যেকতঃ অসংখ্য ব্যক্তি। কারণ সাংখ্যসূত্রে উক্ত হইয়াছে যে, 'লঘুত্বাদি ধর্ম্মদ্বারা সত্ত্বাদিগুণের পরস্পর সাধর্ম্ম্য ও বৈধর্ম্ম্য' হয়। উক্ত সূত্রে লঘুত্বাদি ধর্ম্মদ্বারা বহু সত্ত্বগুণের সাধর্ম্ম্য এবং উক্ত ধর্ম্মদ্বারাই বহু রজোগুণ ও বহু তমোগুণের বৈধর্ম্ম্য। যদি সত্ত্ব-

भावादिति। तस्मात् सत्त्वादीन्यसंख्यव्यक्तिकान्येव द्रव्याणि। तेषु त्रित्ववचनं तु सत्त्वत्वादिविभाजकोपाधित्रयेण

---

निरवयवत्वेऽपि द्रव्यान्तरमेव किमिति नावच्छेदकं स्यादित्याशङ्कायामाह—द्रव्यान्तरस्येत्यादि। तथाहि सृष्ट्यादौ केवलं सत्त्वादित्रयस्य पुरुषस्य च विभुरूपस्य सत्त्वात् अविभोस्तदितरस्य चासत्त्वात् न तदितरस्यापि अवच्छेदकत्वसम्भव इति भावः। तस्मादित्यादि।—तथाहि सत्त्वादीनामविभुरूपाणामसंख्यतया कारणवैचित्र्येण कार्य्यवैचित्र्यं सुघटमेवेति भावः।

अथ सत्त्वादीनामसंख्यव्यक्तिकत्वे सत्त्वादौ त्रित्वव्यवहारः कथमुपपद्यत इति शङ्कयाह तेष्वित्यादि। सत्त्वत्वादीत्यादि,—तथाहि त्रीणि सत्त्वादीनीत्यादौ यत त्रित्वं विशेषणम् तन्न; सत्त्वे विशेष्यांशे अन्वेति, परं सत्त्वत्वरजस्त्वतमस्त्वेषु त्रिष्वेव। यथा परमः सुन्दर इत्यादौ परमत्वं समुत्कर्षापरपर्य्यायं सौन्दर्य्यांशे विशेष्यतावच्छेदक इति।

---

গুণ বহু ব্যক্তি না হয়, তবে লঘুত্ব প্রভৃতি ধর্ম্ম লইয়া সাধর্ম্ম্য সম্ভব হয় না, তমঃ ও রজোগুণের সহিত বৈধর্ম্ম্যমাত্র সম্ভব হইতে পারে। এইরূপ চলত্বাদি ও গুরুত্বাদিধর্ম্মদ্বারা বহু রজোগুণের ও বহু তমোগুণের সাধর্ম্ম্য ও বৈধর্ম্ম্য কথিত হয়। উক্ত সাধর্ম্ম্য ও বৈধর্ম্ম্য রজোগুণ ও তমোগুণ বহুব্যক্তি না হইলে অসম্ভব হয়।

আরও—যদি সত্ত্ব, রজঃ ও তমঃ এই তিনটী প্রত্যেকতঃ এক এক ব্যক্তি হয়, তবে উহার প্রত্যেকটীকে বিভু অর্থাৎ ব্যাপক বলিতে হইবে, কারণ একদা অনেক ব্রহ্মাণ্ডের সৃষ্টির কথা শ্রুতিতে পাওয়া যায়, যদি উহার প্রত্যেকটী বিভু না হয়, তবে অব্যাপকতাহেতু একদা সকল ব্রহ্মাণ্ডের সৃষ্টি উহা হইতে কিরূপে হইতে পারে? উক্ত গুণ বিভু হইলে আর কার্য্যের অনন্ত বৈচিত্র্য সম্ভবপর হয় না, কারণ গুণের ন্যূনাধিকভাবের অভাবহেতু বৈচিত্র্যের কোনও বিশেষ কারণ দেখা যায় না।

वैशेषिकाणां नवद्रव्यवचनवदिति स्थितम् (७)। तानि च सत्त्वादीनि यथायोग्यमणुविभुपरिमाणकानि, अन्यथा रजसश्चलस्वभावत्ववचनविरोधात्। आकाशकारणत्वस्य च विभुत्वौचित्यात्। सर्वेषां कारणद्रव्याणां विभुत्वे कार्य्याणां परिच्छिन्नत्वानुपपत्तेश्च (८)। नन्वेवं वैशेषिकोक्तान्येव पार्थिवा-

---

वैशेषिकाणामित्यादि। तथाहि पृथिव्यादीनां प्रत्येकमसंख्यव्यक्तिकत्वेऽपि पृथिवीत्वादि-नवधर्म्मोपादानेन यथा द्रव्याणां नवत्वं वैशेषिकमतसिद्धम्, पृथिवीत्वादिधर्म्मैरेव नवत्व-संख्याया अबाधितत्वात्, तथैव प्रकृतेऽपि सत्त्वत्वादिधर्म्मत्रयोपादानेन सत्त्वादौ त्रित्व-व्यवहार इति भावः।

(८) ननु सत्त्वादीनामविभुत्वे कथं तेषां विभुरूपाकाशादिरूपेण परिणामः, परिणामिपरिमाणस्य परिणामपरिमाणजनकताया आवश्यकत्वादन्यथा अतिप्रसङ्गदोषः अप्रसक्तनिरासः स्यात् इत्यत आह तानि चेत्यादि।

तथाहि अणुपरिणामकारणीभूतं सत्त्वाद्यणुपरिमाणं विभ्वाकाशादिकारणीभूतञ्च सत्त्वादि विभुपरिमाणमित्येवमभ्युपेयम् इति भावः। इदमेव स्वयमग्रे वक्ष्यति आकाश-कारणत्वस्य चेत्यादिना।

---

পরস্পর সংযোগের বৈচিত্র্যে কার্য্যের বৈচিত্র্য হইবে, ইহাও বলা যায় না, কারণ তিনটী গুণই যখন বিভু, তখন অন্য কোনও অবচ্ছেদক-বিশেষ অপেক্ষা না করিয়া তাহার স্বতই সংযোগবৈচিত্র্য একান্ত অসম্ভব। অপর কোনও দ্রব্যও সৃষ্টির প্রথমে দেখা যায় না, যাহা উক্ত বিচিত্র-সংযোগে অবচ্ছেদক-স্থান অধিকার করিতে পারে। অতএব সত্ত্ব রজঃ ও তমঃ ইহারা প্রত্যেকতঃ অসংখ্য ব্যক্তি দ্রব্যপদার্থ। তবে যে তাহাদের তিন বলিয়া ব্যবহার করা হয়, তাহা বৈশেষিকদর্শনে ক্ষিতিপ্রভৃতি দ্রব্য অসংখ্যব্যক্তি হইলেও যেমন ক্ষিতিত্ব প্রভৃতি অনুগতবিভাজক ধর্ম্ম লইয়া দ্রব্য নয় প্রকার এইরূপ ব্যবহার হয় সেইরূপ। সত্ত্বাদিগুণ তিন বলিয়া ত্রিত্ব ব্যবহার করা হইয়া থাকে।

খাদীনি প্রকৃতিরিত্যায়াতমিতি চেন্ ন; গন্ধাদিগুণশূন্যত্বেন কারণদ্রব্যেষু পৃথিবীত্বাদ্যভাবতোঽস্মাকং বিশেষাৎ। তদুক্তং বিষ্ণুপুরাণাদিষু—

অব্যক্তং কারণং যৎ তৎ প্রধানমৃষিসত্তমৈঃ।
প্রোচ্যতে প্রকৃতিঃ সূক্ষ্মা নিত্যং সদসদাত্মকম্॥

---

(৫) এবমিতি কারণদ্রব্যস্য যথাযথমণুত্বাদ্যঙ্গীকারে ইত্যর্থঃ। পার্থিবাণ্বাদীনীতি,—বৈশেষিকৈঃ কার্য্যদ্রব্যস্য কারণত্বেনাভিমতানি পার্থিবপরমাণুপ্রভৃতীনি ইত্যর্থঃ। গন্ধাদিগুণশূন্যত্বেনেতি গন্ধাদিগুণাভাববত্ত্বেনেত্যর্থঃ। কারণদ্রব্যেষ্বিতি স্বমতসিদ্ধেষু সত্ত্বাদিদ্রব্যত্রয়েষ্বিত্যর্থঃ। বিশেষাদিতি বৈলক্ষণ্যাদিত্যর্থঃ। অস্মাকমিতি সাংখ্যমার্গগতানামিত্যর্থঃ। তথাহি অস্মন্মতে কারণদ্রব্যে প্রকৃত্যভিধানে গন্ধাদিগুণা ন সন্তি, বৈশেষিকাণান্তু কারণদ্রব্যে পার্থিবাণ্বাদৌ গন্ধাদিগুণাঃ সন্তি ইতি।

---

৮ অনু। উক্ত সত্ত্বাদি যথাসম্ভব অণুপরিমাণ ও বিভুপরিমাণ। অন্যথা রজোগুণের চলস্বভাবত্বকথন বিরুদ্ধ হইয়া পড়ে ও বিভুস্বরূপ না হইলে পরমমহৎপরিমাণ আকাশের উহা কারণ হইতে পারে না। ক্ষুদ্র-পরিমাণ বস্তু কখনও বিভুরূপে পরিণত হইতে পারে না। সকল কারণ-দ্রব্যকে বিভু বলিলে আবার কার্য্যের পরিচ্ছিন্নত্ব উপপন্ন হইতে পারে না।

৯ অনু। এখন প্রশ্ন হইতেছে এই যে, যদি পূর্ব্বোক্ত রীতি স্থির হইল, তবে বৈশেষিকোক্ত পার্থিব অণুপ্রভৃতিই প্রকৃতি ইহা নিশ্চিত হয়, তাহার উত্তর এই যে, না, তাহা নহে। সাংখ্যমতসিদ্ধ কারণদ্রব্যে (প্রকৃতিতে) গন্ধাদির অভাবহেতু পৃথিবীত্বাদির অভাব সিদ্ধ হওয়ায় বৈশেষিকমতাপেক্ষা আমাদের মতসিদ্ধ কারণদ্রব্যে বৈলক্ষণ্য সিদ্ধ হইবে, (অর্থাৎ বৈশেষিকগণ কারণদ্রব্যে গুণসত্তা স্বীকার করেন, এতন্মতে কারণদ্রব্য নির্গুণ।) বিষ্ণুপুরাণে তাহা বলা হইয়াছে। যথা—"ঋষি-সত্তমগণ অব্যক্তরূপ কারণকেই প্রধান নিত্য সদসদাত্মক সূক্ষ্মা প্রকৃতি ও

शब्दस्पर्शविहीनं तद् रूपादिभिरसंयुतम् ।

त्रिगुणं तज् जगद्योनिरनादि प्रभवाप्ययम् ॥ ९ इत्यादिना

वैशेषिकाणां कारणद्रव्येषु गन्धाद्यनुमानं तु भाष्येऽस्माभि-निराकृतम् । अथैवमपि, प्रकृतेरणुविभुसाधारणसत्वाद्यनेक-व्यक्तिरूपत्वेऽपरिच्छिन्नत्वैकत्वाक्रियत्वसिद्धान्तश्चतिरिति, मैवं ; कारणद्रव्यत्वरूपप्रकृतित्वेनैवापरिच्छिन्नत्ववचनात् । गन्धत्वेन गन्धानां पृथिवीव्यापकतावत् । आकाशादिप्रकृतीनां विभुत्वेनैव

---

शब्देत्यादि—शब्दविहीनं स्पर्शविहीनञ्च इत्यर्थः । तत्र शब्दविहीनमित्यनेन विभुरूपस्य कारणस्य आकाशत्वादिव्यवच्छेदः, स्पर्शविहीनमित्यनेन रूपादिभिरसंयुत-मित्यनेन च पार्थिवाप्यादिरूपताव्यवच्छेद इति । जगद्योनिरिति जगत्कारण-मित्यर्थः । अनादि आदिरहितम् उत्पत्तिशून्यमित्यर्थः । प्रभवति अस्मादिति प्रभवः उत्पत्तिस्थानम् । अप्ययमिति अपियन्ति विलीयन्ते अस्मिन् इति अप्ययम् लयस्थान-मित्यर्थः । तथाहि यस्याः सर्व्वमुत्पद्यते विलीयते च यत्र, सैव प्रकृतिरिति भावः ।

(१०) ननु कारणद्रव्येषु गन्धप्रत्यक्षासम्भवेऽपि अनुमानेन तत्सिद्धेः कः प्रत्यूह इति शङ्कायामाह वैशेषिकाणामित्यादि । गन्धादीत्यादिपदात् शब्दस्पर्शादीनां ग्रहणम् । भाष्ये इति सांख्यप्रवचनभाष्ये इत्यर्थः । तथा च भाष्यग्रन्थस्य तत्पञ्चविचोभयशैली यथा ;—"प्रकृतेः शब्दस्पर्शादिमत्त्वे तु बाधकमस्ति, 'शब्दस्पर्शविहीनं तद् रूपादिभि-

---

প্রধান বলিয়াছেন। উহা শব্দ স্পর্শ রূপ রস ও গন্ধশূন্য। উহা ত্রিগুণাত্মক জগতের কারণ, উহার আদি নাই। উহাতে সকল বস্তু লীন হয়। ইত্যাদি।

১০ অনু। বৈশেষিকগণ যে কারণদ্রব্যে (পরমাণুতে) গন্ধাদির অনুমান করেন, তাহা আমি (বিজ্ঞানভিক্ষু) সাংখ্যপ্রবচনভাষ্যে নিরা-করণ করিয়াছি।

এখন আপত্তি হইতেছে এই যে, প্রকৃতি যদি অণু-বিভুসাধারণ সত্বাদি অনেকব্যক্তিরূপ হয়, তবে উহার অপরিচ্ছিন্নত্ব একত্ব ও নিষ্ক্রিয়ত্ব

प्रकृतिविभुत्वसिद्धान्तोपपत्तेश्च। तथा पुरुषभेदेन सर्गभेदेन च भेदाभावस्यैवैकशब्दार्थत्वात्। अजामेकामिति श्रुतितस्तथाऽव-गमात्। अथाध्यवसायाभिमानादिक्रियाराहित्यस्यैवाऽक्रिय-शब्दार्थत्वात्। अन्यथा श्रुतिस्मृतिषूक्तस्य प्रकृतिक्षोभस्याऽनुप-पत्तेरिति। प्रकृतिगताश्चाऽपरे विशेषा भाष्ये द्रष्टव्याः॥ (१०)

---

रसंयुतम्। त्रिगुणं तद्‌ जगद्योनिरनादि प्रभवाप्ययम्’मित्यादि विष्णुपुराणादिवाक्य-जातम्। बुद्ध्यहङ्कारयोश्च शब्दस्पर्शादिमत्त्वे भूतकारणत्वश्रुतिस्मृतय एव बाधिकाः सन्ति। बाह्येन्द्रियग्राह्यजातीयविशेषगुणवत्त्वस्यैव भूत लक्षणत्वेन तयोरपि भूतत्वापत्त्या स्वस्य स्वकारणत्वानुपपत्ते”रिति। अन्यत्तु तत्रैवानुसन्धेयम्।

अथ प्रकृतेरणुविभुसाधारणसत्त्वाद्यनेकरूपत्वेऽपि अपरिच्छिन्नत्वैकत्वादिकमुपपाद-यति अथैवमपीत्यादिना। प्रकृतेरणुत्वं विभुत्वञ्च उपपादितमेव प्राक्। अपरिच्छिन्नत्वं परिच्छिन्नरूपाभिन्नत्वं व्यापकत्वमिति यावत्। तथाहि प्रकृतिर्यद्यपरिच्छिन्नरूपा तदा अणुत्वानुपपत्तिः, अणुत्वे च नापरिच्छिन्नत्वसम्भावनापीति। यदि च व्यक्तिभेदेन अणु-विभुरूपा तदा कथमेकत्वोक्तिसङ्गतिः। अणुरूपस्य च सक्रियतया नाक्रियत्वमपीति स्फुटार्थः। नैवमिति समाधत्ते।—तथाहि यथा पृथिवीवृत्तिगन्धव्यक्तीनां पृथिवी-व्यक्तिभेदेन भेदे कस्याश्चिदेकस्या गन्धव्यक्तेः तद्व्यक्तितया पृथिवीव्यापकत्वासम्भवेऽपि क्वापि पृथिवीव्यक्तौ गन्धो नास्तीति प्रतीतिसिद्धाभावस्याभावेन गन्धत्वेन गन्धस्य पृथिवीव्यापकत्वं तथैव परिच्छिन्नायाम् अपरिच्छिन्नायां वा सर्व्वत्रैव प्रकृतौ कारणद्रव्यत्वस्य सत्त्वेन अणुरूपस्य विभुरूपस्य वा प्रधानस्य सर्व्वत्रैव वर्त्तमानतया तादृशं

---

সিদ্ধান্ত কি করিয়া ঠিক থাকে? তাহার উত্তর এই যে, প্রকৃতির যে অপরিচ্ছিন্নত্ব বলা হইয়াছে, উহা কারণদ্রব্যত্বরূপ প্রকৃতিত্ব আদান করিয়া জানিবে। গন্ধ বহুব্যক্তি হইয়াও যেমন গন্ধত্বরূপে গন্ধ পৃথিবীর ব্যাপক ঐরূপ। আকাশাদিকারণীভূত প্রকৃতি বিভু বলিয়াই প্রকৃতির বিভুত্বসিদ্ধান্ত অক্ষুণ্ণ জানিবে। পুরুষভেদে ও সৃষ্টিভেদে প্রকৃতির ভেদ

प्रकृत्यनुमानं चेदम्,—सुखदुःखमोहात्मकं महदादिकार्य्यं सुखदुःखमोहात्मकद्रव्यकार्यं सुखदुःखमोहात्मकत्वात् वस्त्रादिकार्य्यशय्यादिवदिति। श्रुतिस्मृती चाऽत्राऽनुग्राहकस्तर्कः। एवं

---

कारणद्रव्यं नास्तीत्यभावस्य क्वाप्यभावात् कारणद्रव्यत्वेन व्यापकत्वं सुघटमेवेति भावः। पुरुषभेदेनेत्यादि। तथाहि यैव अणुरूपा विभुरूपा वा प्रकृतिरस्मिन् सर्गे कार्य्यरूपेण परिणता, सैव अणुरूपा विभुरूपा वा प्रकृतिरपरस्मिन्नपि सर्गे इति एकत्वतात्पर्य्यम्। ननु प्रकृतेरेकत्वमिति नानत्विञ्चर्चेदुपपाद्यं तदेव कुत इत्याकाङ्क्षायामाह अजामेकामित्यादि। प्रकृतिक्षोभस्येति—तथाहि स्पन्दाद्यात्मकक्रियामन्तरेण प्रकृतेः क्षोभाभावात् सक्रियत्वमेव स्वीकार्य्यमिति भावः। प्रकृतेः सक्रियत्वोपपादिका श्रुतिर्यथा—'तत्परेणेरितं विषमत्वं प्रयाति' इत्यादिः। स्मृतिश्च यथा—'प्रधानं पुरुषं चापि प्रविश्यात्मेच्छया हरिः। क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ'। इत्यादिः।

(११) अनुमानप्रमाणेन प्रकृतेः सिद्धिमभिप्रेत्याह—प्रकृत्यनुमानमित्यादि। सुखदुःखेत्यादि। तथाहि यद् यदात्मकं तत् तदात्मकद्रव्योपादानकमिति सामान्यतो व्याप्तिरेतन्मते अभिमता. तत्रैव सुखाद्यात्मकवस्त्रादिकार्य्यशय्यादिरुदाहरणम्।

---

নাই বলিয়াই তদভিপ্রায়ে প্রকৃতির একত্বোক্তিও সঙ্গত হয়। 'অজামেকাম্' ইত্যাদি শ্রুতি হইতেই উক্ত প্রকৃতির একত্ব অবগত হওয়া যায়। প্রকৃতির নিষ্ক্রিয়ত্বোক্তিও অধ্যবসায় ও অভিমানাদি ক্রিয়ারাহিত্যরূপ অর্থ আদান করিয়া সঙ্গত হয়; তাহা না হইলে যদি অক্রিয়পদের যথাশ্রুত অর্থ গ্রহণ করা হয়, তবে শ্রুতি ও স্মৃতিতে যে প্রকৃতিক্ষোভের কথা পাওয়া যায়, তাহার অনুপপত্তি হয়। ভাষ্যে প্রকৃতিসম্বন্ধীয় অপর বিশেষ-বিবরণ জানিবে।

১১; প্রকৃতি অনুমানদ্বারা সিদ্ধ, ইহা পূর্ব্বে বলা হইয়াছে। উক্ত প্রকৃতির অনুমান এইরূপ। যথা—বস্ত্রাদিকার্য্য শয্যাদির ন্যায় সুখ-

सामान्यतोऽनुमितायाः प्रकृतेर्विशेषाः शास्त्राद् योगाच्चाव-गन्तव्याः, अनुमानस्य सामान्यमात्रविषयकत्वात् (११)।

नन्वन्तरेव सुखादिकमुपलभ्यते, बाह्यवस्तुषु सुखादौ किं प्रमाणं, येन दृष्टान्तता स्यादिति? उच्यते—अन्तःकरणस्य सुखादिहेतुतया विषयेषु सुखादिकं सिध्यति। न च रूपादि-गतोत्तमत्वादिकमेव सुखाद्युत्पादने नियामकम्; उत्तमत्वादे-

श्रुतिस्मृती इत्यादि। अत्र श्रुतिः—'अजामेकां लोहितशुक्लकृष्णां वह्वीः प्रजाः सृजमानां सरूपा' इति। तथाहि अत्र सरूपा इत्यनेन कार्य्याणामपि सरूपत्वोक्त्या कारणस्य कार्य्यस्य च तुल्यतया सुखदुःखमोहात्मकत्वं प्रतिपद्यत इति।

तदेवं सामान्यतः सुखदुःखमोहात्मकद्रव्यत्वादिना प्रकृतेरनुमाने विशेषतोऽप्रति-पत्तावपि विशेषरूपेण सिद्धिर्नानुमानात्, परं शब्दप्रमाणात् योगजन्मनोरलौकिकसन्नि-कर्षाच्चेति भावः। अत एव स्वयं प्रकृतेर्विशेषाः शास्त्रात् योगाच्च अवगन्तव्या" इत्याह।

(१२) अथ वस्त्रादिकार्य्यशय्यादिदृष्टान्तेन महदादिकार्य्ये सुखदुःखमोहात्मक-द्रव्यकार्य्यत्वसाधने अनायत्या वस्त्रशय्यादीनां सुखदुःखमोहात्मकता स्वीकार्य्या भवति,

দুঃখমোহাত্মক মহদাদি কার্য্য সুখদুঃখমোহাত্মক দ্রব্যের কার্য্য, কারণ উহা সুখদুঃখমোহাত্মক। শ্রুতি ও স্মৃতি ইহার অনুকূল তর্ক। এইরূপে সামান্যতঃ অনুমিত প্রকৃতির বিশেষ অবস্থা শাস্ত্র হইতে ও যোগশক্তি-সাহায্যে জানিবে। কারণ উক্ত অনুমান সামান্য বস্তুরই সিদ্ধি করে। বিশেষ বিশেষ ভাবের নহে।

১২ অনু। এখন আপত্তি হইতেছে এই যে, আচ্ছা, সুখাদি আভ্য-ন্তর বস্তু, উহা অন্তরেই উপলব্ধি করা যায়। বাহ্যবস্তুতে যে সুখাদি আছে, তদ্বিষয়ে প্রমাণ কি? যাহাতে বস্ত্রাদিকার্য্য শয্যারূপ বাহ্যবস্তু উক্তস্থলে দৃষ্টান্ত হইতে পারে? উহার উত্তরে বলা যাইতেছে যে,

जातिरूपत्वे नीलत्वपीतत्वादिना जातिसाङ्कर्य्यापत्तेः। कालादि-भेदैरेकस्या एव रूपव्यक्तेः सुखदुःखोत्पादकत्वाच्च। अतः सुखादिमत्त्वमेवोत्तमत्वादिकम्। किञ्च घटरूपमिति-प्रत्ययवत् स्त्रीसुखं चन्दनसुखमित्यादिप्रत्ययादपि विषये

---

अन्यथा तथा दृष्टान्तासम्भवात्। न हि साध्यहेत्वोः समानाधिकरणस्थलं विना दृष्टान्तो घटत इति तदुपपादनाय शङ्कते नन्वन्तरैवेत्यादि। समाधानमाह, उच्यत इत्यादिना। अन्तःकरणस्येत्यादि—तथाहि अन्तःकरणस्यैव सुखादिरूपेण परिणतिरिति सुखादि-रूपत्वमस्य निरपवादम्। अन्यथा सुखाद्युत्पादे नियमो न स्यादिति भावः।

ननु विषयस्य सुखादिरूपत्वमन्तरेणापि सुखादिनियमोपपत्तिश्चेदन्यथा उपपादयितुं शक्या, तदा विषयस्य सुखादिरूपता न सिध्येत्, अन्यथा तदुपपादनञ्च शक्यसाधनमित्या-शङ्कते न चेत्यादिना। तथाहि उत्तमरूपदर्शनात् सुखम् अपकृष्टरूपदर्शनात् दुःख-मित्यादिनियमः साधनीयः।

जातिसाङ्कर्य्यापत्तेरिति—जातिसाङ्कर्य्यञ्च परस्पराभावसामानाधिकरण्ये सति सामानाधिकरण्यं, स्वसामानाधिकरण्य-स्वाव्याप्यत्व-स्वाव्यापकत्वैतत्त्रितयसम्बन्धेन जाति-विशिष्टत्वम् इति यावत्। तथाहि एकस्य नीलरूपादेरेव उत्तमस्य उत्तमभिन्नस्य च वर्त्तमानतया उत्तमत्वादिधर्मे नीलत्वादिसामानाधिकरण्यस्य स्वाव्याप्यत्वस्य तथा श्वेतरूपादौ उत्तमत्वस्य सत्त्वाच्च स्वाव्यापकत्वस्य सिद्ध्या नीलत्वादिनिरूपित-साङ्कर्य्यं उत्तमत्वादौ प्रसक्तमिति भावः। तच्च उत्तमत्वादेर्जातित्वं प्रतिबध्नाति। 'व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसंग्रहः'। इति जातिबाधकनिरुक्तिः॥

---

অন্তঃকরণ সুখাদির প্রতি হেতু বলিয়া বিষয়েও সুখাদি সিদ্ধ হয়। রূপাদিগত উত্তমত্বাদিই সুখাদির উৎপাদনে নিয়ামক এ কথা বলা যায় না, কারণ, উত্তমত্ব প্রভৃতিকে জাতিরূপ স্বীকার করিতে গেলে নীলত্ব পীতত্বাদিরূপ জাতিদ্বারা জাতিসাঙ্কর্য্যদোষ উপস্থিত হয়। (কারণ নীলরূপের মধ্যে কোনও রূপ উত্তম, কোনও রূপ আবার উত্তমত্বশূন্য

सुखाद्युचितम्। अधिकं तु भाष्ये द्रष्टव्यम्। (१२)

तदेवं प्रकृतिर्निरूपिता।

—o—

महत्तत्त्वं निरूप्यते :—प्रकृतेः सकाशाद् बुद्ध्याख्यं महत्तत्त्वं जायते। तस्य धर्मादिरूपप्रकृष्टगुणयोगात् महत्संज्ञा ; तदेव च लक्षणम्। महान् बुद्धिः प्रज्ञेत्यादयस्य तस्य पर्य्यायाः। तथा चोक्तमणुगीतायाम् ;—

रूपगतोत्तमत्वादीनां सुखादिनियामकत्वे च उत्तमं रूपं सर्व्वदा सर्व्वस्य सुखमेव जनयेत्, न दुःखम्, एवं स्थिते एकमेव रूपं पश्यतः कालभेदेन सुखदुःखयोरनियमेन समुत्पत्तिर्न सुघटा भवतीति। उत्तमत्वादीनां जातित्वेन तेषां व्याप्यवृत्तितया काल-भेदेन तत्सत्त्वासत्त्वसम्भावनाया अपि व्याघातादिति आह—कालादीत्यादिना। युक्तिमुपदर्श्य अनुभवमपि प्रमाणयति किञ्चेत्यादिना। भाष्य इति सांख्यप्रवचन-भाष्य इत्यर्थः। तत्रैव 'ननु विषयेषु सुखादिमत्त्वे प्रमाणं नास्ति, अहं सुखी इत्याद्येवानुभवा'दित्यादिना सविस्तरमस्य विषयस्य स्वयं समालोचितत्वात्।

तदेवं बहुविधाभिर्युक्तिभिरनुभवैश्च विषयाणां सुखाद्यात्मकत्वे सिद्धे वस्त्रशय्यादि-रूपसुखाद्यात्मकद्रव्यदृष्टान्तेन महत्तत्त्वादिकार्य्ये सुखदुःखमोहात्मकद्रव्यकार्य्यतानुमानं शक्यसाधनं भवति इति नात्र दृष्टान्तासिद्धिदोषस्यावसरोऽपीति भावः।

আবার নীলভিন্ন শ্বেতাদিরূপেও উত্তমত্ব আছে, কাজেই নীলত্বাদি জাতি লইয়া জাতিসাঙ্কর্য্য সম্ভব হয়। কালাদিভেদে আবার একই রূপ-ব্যক্তি সুখ ও দুঃখ উৎপাদন করিয়া থাকে ; অতএব সুখাদিমত্ত্বকেই উত্তমত্বাদিরূপ মানিয়া লইতে হইবে। তবে আর কিরূপে বিষয়ে সুখাদি স্বীকার ব্যতীত বিষয়ের উত্তমত্বাদি উপপন্ন হয় ?

আরও 'ঘটের রূপ' এই প্রকার প্রতীতির ন্যায় 'স্ত্রীসুখ' ও 'চন্দনসুখ' ইত্যাদি প্রতীতি হইতেও বিষয়ে সুখাদি স্বীকার করা উচিত দেখা যায়। এতদতিরিক্ত বক্তব্য ভাষ্যে অবগত হইবে। এইরূপে প্রকৃতির নিরূপণ করা হইল।

'महानात्मा मतिर्विष्णुर्जिष्णुः शम्भुश्च वीर्य्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च तथा ब्रह्मा धृतिः स्मृतिः ।
पर्य्यायवाचकैरेतैर्महानात्मा निगद्यते ॥
सर्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखः ।
सर्वतः श्रुतिमाँल्लोके सर्वं व्याप्य स तिष्ठति ॥
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ।
ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः ॥
विमुक्ताः सर्व एवैते महत्त्वमुपयान्त्युत ।
विष्णुरेवादिसर्गेषु स्वयम्भूर्भवति प्रभुः' ॥ इति ।

---

(१३) प्रकृतिनिरूपणानन्तरं महत्तत्त्वनिरूपणं शिष्यावधानाय प्रतिजानीते महत्तत्त्वमित्यादिना । अत्र सङ्गतेः प्रदर्शनाय अथेत्यध्याहार्य्यम् । सा च प्रकृते उपजीवकत्वधर्म्ममादाय प्रसङ्गरूपा बोध्या । निरूप्यत इत्यत्र भविष्यत्सामीप्ये वर्त्तमानाविधानात् प्रकृतवाक्यस्य प्रतिज्ञावाक्यत्वसिद्धिः । प्रकृतेः सकाशादिति महत्तत्त्वस्य उपादानकथनम् । बुद्ध्याख्यमिति प्रसिद्धसंज्ञानिरुक्तिः । धर्म्मादीत्यादिपदात् ज्ञान-वैराग्यैश्वर्य्याणां सा त्वक्षीतकृष्टगुणत्रयाणां ग्रहणम् । तथाहि प्रकृष्टतमधर्म्मवैराग्यै-श्वर्य्यात्मकगुणसमूहस्य आश्रयत्वेन महत्त्वमादाय एव महदिति बुद्धितत्त्वस्य संज्ञा । अन्ये तु महत्तत्त्वस्य न अणुत्व, नापि परममहत्त्वं, किन्तु महत्त्वापराख्यमध्यमपरिमाणत्व-मेवेति प्रतिपादनाय महदिति विशेषसंज्ञां प्राहुः । तदेव चेत्यापातदर्शनम् । वस्तुतस्तु महत्तत्त्वस्य विशेषलक्षणं अध्यवसाय एव ; अन्यथा अहङ्काराद्यतिप्रसङ्गैरपोहितुमशक्य-

---

১৩ অনু। সম্প্রতি মহত্তত্ত্বের নিরূপণ করা যাইতেছে। প্রকৃতি হইতে বুদ্ধিনামক মহত্তত্ত্ব উৎপন্ন হয়। উহাতে ধর্ম্মজ্ঞানাদি প্রকৃষ্ট গুণ থাকে বলিয়া উহার মহত্তত্ত্ব এইরূপ সংজ্ঞা। উহাই মহত্তত্ত্বের লক্ষণ।

মহান্ বুদ্ধি প্রজ্ঞা ইত্যাদি মহত্তত্ত্বের পর্য্যায়, অণুগীতায় তাহাই উক্ত আছে যে,—মহান্, আত্মা, মতি, বিষ্ণু, জিষ্ণু, শম্ভু, বীর্য্যবান্, বুদ্ধি,

অত্র সত্ত্বাদ্যংশত্রয়েণ মহতো দেবতাত্রয়োপাধিত্বাৎ তদবিবেকেন ব্রহ্মবিষ্ণুশিবত্ববচনম্। তদুক্তং বিষ্ণৌ;—

'সাত্ত্বিকো রাজসশ্চৈব তামসশ্চ ত্রিধা মহান্।' ইতি।

মাৎস্যে চ—

'সবিকারাৎ প্রধানাৎ তু মহত্তত্ত্বমজায়ত।
মহানিতি যতঃ খ্যাতির্লোকানাং জায়তে সদা॥
গুণেভ্যঃ ক্ষোভ্যমাণেভ্যস্ত্রয়ো দেবা বিজজ্ঞিরে।
একা মূর্ত্তিস্ত্রয়ো দেবা ব্রহ্মবিষ্ণুমহেশ্বরাঃ'॥ ইতি (১২)।

---

ত্বাৎ। মহানিত্যাদিসংজ্ঞায়াং প্রাচীনপ্রসিদ্ধিমাহ মহানাত্মেত্যাদিনা। পর্য্যায়বাচকৈরিতি—পর্য্যায়ত্বঞ্চ বিভিন্নানুপূর্ব্বীমত্ত্বে সতি একার্থবোধকশব্দত্বম্। সর্ব্বতঃ পাণিপাদশ্চেতি সর্ব্বব্যাপকত্বাভিপ্রায়েণ। সর্ব্বতোঽক্ষিশিরোমুখশ্চ ইতি সর্ব্বজ্ঞত্বাভিপ্রায়েণ অণিমেত্যণুভাবঃ, যেন শিলামপি প্রবেষ্টুমীষ্টে। লঘিমেতি লঘুভাবঃ, যতঃ সূর্য্যমরীচিসমবলম্বনেনাপি সূর্য্যলোকমপি যাতি। প্রাপ্তিরিতি,—যতঃ অঙ্গুল্যগ্রেণ স্পৃশতি চন্দ্রম্। এতদুপলক্ষণম্, প্রাকাম্যাদয়োঽপি বোধ্যাঃ। ঈশান ইত্যনেন সর্ব্বেষামৈশ্বর্য্যাণাং সামান্যতো লাভেনাপি তদুপপত্তিঃ সুশকা। ননু রজোগুণপ্রধানস্য মহত্তত্ত্বস্য ব্রহ্মত্বং, সত্ত্বগুণপ্রধানমহত্তত্ত্বস্য বিষ্ণুত্বং, তমোগুণপ্রধানমহত্তত্ত্বস্য শিবত্বমিতি সিদ্ধান্তঃ; তদেবং একস্যৈব কিমিতি ব্রহ্মবিষ্ণুশিবত্বোক্তিঃ সন্দেহস্থত ইত্যাশঙ্ক্যাহ...অত্রেত্যাদি।

---

প্রজ্ঞা, উপলব্ধি, ব্রহ্মা, ধৃতি, স্মৃতি, এই সকল পর্য্যায়বাচক শব্দ দ্বারা মহত্তত্ত্ব উক্ত হইয়া থাকে। উহার সর্ব্বত্র পাণি ও পাদ, সর্ব্বত্র অক্ষি শির ও মুখ, সকল দিকে শ্রুতি অর্থাৎ ঐ মহত্তত্ত্ব সর্ব্বব্যাপকভাবে অবস্থিত। ইহার অণিমা, লঘিমা, প্রাপ্তি ঐশ্বর্য্য ও জ্যোতিঃ আছে, ইনি অব্যয়। যে কেহ জ্ঞানবান্ অলুব্ধ জিতমন্যু সকলেই বিমুক্ত হইয়া মহত্তত্ত্বস্বারূপ্য লাভ করেন। বিষ্ণুই আদিসর্গে স্বয়ম্ভু হইয়া থাকেন।

অণিমেত্যাদিভাবনির্দ্দেশো ধর্ম্মধর্ম্ম্যভেদাৎ। ব্রহ্ম-মহেশ্বরাপেক্ষয়াপ্যাদৌ বিষ্ণুরূপেণৈব মহানাবির্ভবতীতি বিষ্ণু-রেবেত্যর্দ্ধেনোক্তম্। ইদমেব মহত্তত্ত্বমংশতো রজস্তমঃসম্ভেদেন

---

তদবিবেকেন তদভেদোপচারেণ। তথাহি সর্ব্বস্যৈব মহত্তত্ত্বরূপতয়া একস্য মহত্তত্ত্বস্য ত্রিতয়ত্বোক্তিরিতি। সাত্ত্বিক ইতি সত্ত্বগুণপ্রধানঃ। রাজস ইতি রজোগুণপ্রধানঃ। তামস ইতি তমোগুণপ্রধান ইত্যর্থঃ। ত্রিধেতি—সাত্ত্বিকত্বরাজসত্বতামসত্বত্রিতয়-ধর্ম্মবানিত্যর্থঃ।

সবিকারাদিতি—গুণক্ষোভরূপবিকারযুক্তাৎ ইত্যর্থঃ। ক্ষোভ্যমাণেভ্য ইতি রজসঃ চঞ্চলতয়া ক্রিয়াপরপর্য্যায়ং ক্ষোভমানীতেভ্য ইত্যর্থঃ। ত্রয়ো দেবা ইতি ব্রহ্মবিষ্ণুমহেশ্বরা ইত্যর্থঃ। একা মূর্ত্তিরিতি সমষ্টিমহত্তত্ত্বরূপেণ একত্বমুপাদায়।

(১৪) ননু অণিমাদীনি হি ঐশ্বর্য্যাণি, তানি চ ধর্ম্মা মহত্তত্ত্বস্য, তৎ কথং অনুগীতানিবন্ধে 'অণিমা ত্বণিমে'ত্যাদিনা তদভেদোক্তিঃ সঙ্গচ্ছত ইত্যাশঙ্ক্যাহ অণিমে-ত্যাদীতি। এতৎসিদ্ধান্তে ধর্ম্মধর্ম্মিণোরভেদঃ স্বীকৃত এব গুণগুণিনোরভেদাদীনা-মনঙ্গীকারে তত্ত্বান্তরাণামাধিক্যেন স্বীকার্য্যত্বাপাতাৎ। তদত্রাপি ধর্ম্মধর্ম্মিণো-রভেদোপচারাৎ নাসঙ্গতিরিতি ভাবঃ।

---

এস্থলে সত্ত্বাদি অংশত্রয় লইয়া এক মহত্তত্ত্বের ব্রহ্মা বিষ্ণু ও শিবরূপ দেবতাত্রয়ের উপাধিত্ব হেতু উহার ভেদবিচার পরিত্যাগ করিয়াই উহাকে ব্রহ্মা বিষ্ণু ও শিব বলিয়া বলা হয়। বিষ্ণুপুরাণে কথিত আছে, যে মহত্তত্ত্ব তিন প্রকার, সাত্ত্বিক রাজসিক ও তামসিক। মৎস্যপুরাণেও কথিত আছে যে,—প্রধান বা প্রকৃতি বিক্ষুভিত হইলে তাহা হইতে মহত্তত্ত্বের উৎপত্তি হয়,—যাহার মহান্ এই প্রসিদ্ধি সর্ব্বদা শাস্ত্রজ্ঞসমাজে হইয়া থাকে। তিনটী গুণ সত্ত্ব রজঃ ও তমঃ, ইহারা ক্ষুভিত হইলে, তাহা হইতেই তিন দেবতার উৎপত্তি হইয়াছে। উহার এক প্রকৃতিই মূর্ত্তি; পরন্ত ক্রিয়াভেদে ব্রহ্মা বিষ্ণু ও মহেশ্বর এই তিন সংজ্ঞা।

परिणतं सत् व्यष्टिजीवानामुपाधिधर्म्मादियुक्तं क्षुद्रमपि भवति ; 'महदुपरागाद् विपरीत'मिति सांख्यसूत्रात्। महत्तत्त्वस्य प्राधान्येनासाधारण्येन चाध्यवसायो वृत्तिः, महदहङ्कारमनस्त्रितयात्मकस्यान्तःकरणस्य महत्तत्त्वं वीजावस्थेति। अत्र "प्रकृतेर्महान् महतोऽहङ्कारः" इत्यादिसृष्टिक्रमे शास्त्रमेव प्रमाणम्। अनुमानेन सामान्यतः कार्य्याणां सकारणकत्वमात्रसिद्धः। न तु सृष्टौ भूतादिक्रमो वाऽन्तःकरणादिक्रमो वेत्येकतरावधारकमनुमानं सम्भवति ; स्पष्टलिङ्गाभावात्। श्रुतिस्मृत्यनुगृहीतं यथाकथञ्चित् लिङ्गं तु महदादिक्रमेऽस्तीति भाष्येऽस्माभिः प्रदर्शितम्। (१४)

महत्तत्त्वं निरूपितम्।

—o—

प्राधान्येनेत्यनेन—अप्राधान्येन अपरेषामपि धर्म्माणां वैराग्यादीनामाश्रयत्वं व्यज्यते। असाधारण्येनेति महत्त्वसमनियतधर्म्मत्वेनेत्यर्थः। तथाहि अध्यवसायो नाम वृत्तिर्महत्त्वस्य लक्षणमिति भावः।

त्रितयात्मकस्येति—तथाहि एकमेव हि अन्तःकरणं अध्यवसायाभिमानसङ्कल्पात्मकवृत्तित्रयभेदेन महत्तत्त्वा-हङ्कारतत्त्व-मनस्तत्त्वरूपसंज्ञाभेदान् लभते, तत एव अन्तःकरणस्य त्रितयात्मकत्वम् इति भावः।

वीजावस्थेति—तथाहि आदौ महत्तत्त्वं, तदनन्तरम् अहङ्कारः, ततश्च मनस्तत्त्वमिति पौर्व्वापर्य्यनियमात् महत्तत्त्वस्य वीजावस्थात्वमिति भावः। अथादौ महत्तत्त्वस्य सृष्टौ

১৪ অনু। অণিমা লঘিমা প্রভৃতির কথা যে পূর্ব্বে উক্ত হইয়াছে, উহা ধর্ম্ম ও ধর্ম্মীর অভেদ বিবক্ষা করিয়া মহত্তত্ত্বের স্বরূপ বলা হইয়াছে। ব্রহ্মা ও শঙ্কর অপেক্ষা প্রথমতঃ মহত্তত্ত্ব বিষ্ণুরূপে আবির্ভূত বলিয়াই 'বিষ্ণুরেব' বলিয়া অর্দ্ধাংশ দ্বারা মহত্তত্ত্বকে একমাত্র বিষ্ণুস্বরূপ বলা হইয়াছে জানিবে।

अहङ्कारो निरूप्यते।—महत्तत्त्वादहङ्कार उत्पद्यते, अङ्कुरात् शाखावत्। तस्य चाभिमानवृत्तिकत्वादहङ्कारसंज्ञा, कुम्भकारसंज्ञावत्। तदेव लक्षणम्। तस्य च पर्य्यायाः कौर्म्मे प्रोक्ताः ;—

'अहङ्कारोऽभिमानश्च कर्त्ता मन्ता च संस्मृतः।
आत्मा देही च जीवो वै यतः सर्वाः प्रवृत्तयः'॥ इति (१५)

---

किं मानमित्याकाङ्क्षायामाह शास्त्रमेवेति। एव-शब्दस्य प्रकृते इतरमानव्यवच्छेदार्थत्वात्—अत्र प्रत्यक्षादिप्रमाणासम्भवमिति भावः सुव्यक्तः। एकतरावधारकमिति निरुक्तान्यतरसाधकमित्यर्थः। स्पष्टलिङ्गाभावादिति—प्रसिद्धानुमापकनिर्द्दोषहेतुत्वभावादित्यर्थः।

---

এই মহত্তত্ত্বই অংশতঃ রজঃ ও তমোগুণের সহিত মিলিত হইয়া পরিণামলাভপূর্ব্বক ব্যষ্টিজীবের উপাধি অধর্ম্মাদিযুক্ত ক্ষুদ্রও হইয়া থাকে, কারণ সাংখ্যসূত্রেই আছে যে, 'মহদুপরাগাদ্ বিপরীতম্', অর্থাৎ মহৎ তত্ত্বের উপরাগহেতু বৈপরীত্য হয়।

মহত্তত্ত্বের প্রধান ও অসাধারণ বৃত্তি অধ্যবসায়। মহত্তত্ত্ব অহঙ্কারতত্ত্ব ও মনস্তত্ত্ব এই ত্রিতয়াত্মক অন্তঃকরণের মহত্তত্ত্বই বীজাবস্থা। ( অর্থাৎ প্রথম যেমন বীজ অব্যক্ত বৃক্ষস্বরূপে বর্ত্তমান থাকে, পরে উহাই ব্যক্ত বৃক্ষরূপে পরিণত হয় ; সেই রূপ প্রথমতঃ মহত্তত্ত্বাবস্থায় অবস্থিত প্রকৃতি অহঙ্কাররূপে পরিণত হয়। অনন্তর আবার উহাই মনস্তত্ত্বরূপ অন্তঃকরণাবস্থা লাভ করে। ) এস্থলে 'প্রকৃতি হইতে মহান্, মহান্ হইতে অহঙ্কার', ইত্যাদি সৃষ্টির ক্রমবিষয়ে শাস্ত্রই প্রমাণ। কারণ অনুমান দ্বারা সামান্যতঃ কার্য্যের কারণ সিদ্ধ হয়, কিন্তু সৃষ্টিতে ভূতাদিক্রম বা অন্তঃকরণাদির ক্রম অনুমান দ্বারা নির্দ্ধারিত হয় না। যেহেতু উহার স্পষ্ট কোনও লিঙ্গ নাই। শ্রুতি ও স্মৃতি দ্বারা অনুকূলিত কোনওরূপ একটা লিঙ্গ মহদাদিক্রমে আছে ইহা আমি ( বিজ্ঞানভিক্ষু ) ভাষ্যে দেখাইয়াছি। মহত্তত্ত্ব নিরূপণ করা হইল।

यं चाहङ्कारस्त्रिविधतया त्रिविधकार्य्यहेतुः। तदुक्तं कौर्म्मे ;—

'वैकारिकस्तैजसश्च भूतादिश्चैव तामसः।
त्रिविधोऽयमहङ्कारो महतः सम्बभूव ह॥
तैजसादिन्द्रियाणि स्युर्देवा वैकारिकाद् दश।
एकादशं मनश्चात्र स्वगुणेनोभयात्मकम्।
भूततन्मात्रसर्गस्तु भूतादेरभवन् प्रजाः'। इति।

---

(१५) अहङ्कार इति—अत्रापि अहङ्कारस्य महत्तत्त्वोपजीवकतया सङ्गतिरूह्या। तत्सूचनाय अथेत्यध्याहार्य्यम्। इदमपि पूर्व्ववत् प्रतिज्ञावाक्यमवसेयम्।

कुम्भकारसंज्ञावदिति ;—तथाहि कुम्भं करोतीति व्युत्पत्त्या कुम्भनिर्म्माणकारिण एव यथा कुम्भकारसंज्ञा, तथैव अहम् अभिमानं करोति उत्पादयति तद्रूपेण परिणमत इति व्युत्पत्त्या अभिमानवृत्तिकमेवान्तःकरणं अहङ्कारशब्देनाभिधीयत इति भावः। तद्वेति अभिमानवृत्तिकत्वमित्यर्थः। वृत्तिकत्वपर्य्यन्तमनिवेश्य अभिमानमात्रस्यैव लक्षणत्वं लाघवादिति नव्याः।

(१६) त्रिविधतयेति—सत्त्वाद्येकैकगुणप्राधान्येन त्रिप्रकारतयेत्यर्थः। त्रिविध-कार्य्यहेतुरिति सात्त्विकराजसिकतामसिकभेदेन त्रिप्रकारकार्य्यहेतुरित्यर्थः। कौर्म्मवाक्येन

---

১৫ অনু। সম্প্রতি অহঙ্কার নিরূপণ করা যাইতেছে। মহত্তত্ত্ব হইতে অহঙ্কার উৎপন্ন হয়; যেমন অঙ্কুর হইতে শাখা জন্মে সেইরূপ। উক্ত অহঙ্কারতত্ত্বের বৃত্তি অভিমান, এইজন্য কুম্ভকারসংজ্ঞার ন্যায় অহঙ্কার এই সংজ্ঞা যৌগিক সংজ্ঞা। উক্ত অভিমানাখ্য বৃত্তিই উহার লক্ষণ। তাহার পর্য্যায়শব্দ কূর্ম্মপুরাণে কথিত আছে, 'অহঙ্কার, অভিমান, কর্ত্তা, মন্তা, আত্মা, দেহী ও জীব, যাহা হইতে সর্ব্ববিধ প্রবৃত্তি হইয়া থাকে'।

১৬ অনু। উক্ত অহঙ্কার ত্রিবিধ, অর্থাৎ সাত্ত্বিক, রাজসিক ও তামসিক বলিয়া, উহা ত্রিবিধ কার্য্যের অর্থাৎ সাত্ত্বিক রাজসিক ও তামসিক

वैकारिकः सात्त्विकः। तैजसो राजसः। स्वगुणेनेन्द्रियवृत्तिषु साहाय्यरूपेणोत्कर्षेण। उभयात्मकं ज्ञानकर्मोभयेन्द्रियात्मकम्। 'अन्यत्रमना अभूवं नाऽश्रौषम्'मित्यादिश्रुत्या मनसो ज्ञानकर्मोभयेन्द्रियसहकारित्वसिद्धेरिति। एकादशेन्द्रियदेवाश्च—

'दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ;
चन्द्रश्च ॥' (१६)

इति अहङ्कारो निरूपितः।

—০—

अहङ्कारस्य त्रैविध्यं प्रमाणयति वैकारिक इत्यादिना। महतः महत्तत्त्वात्। देवाः वक्ष्यमाणा दिगादयः। स्वगुणेनेति,—स्वयमेव व्याख्यास्यते।

कौर्म्मप्रमाणेन प्रमाणितमिदं वस्तु विज्ञानभिक्षुसम्मतम्। वाचस्पतयस्तु मनःसहकृतानाम् एकादशेन्द्रियाणां वैकारिकाहङ्कारात् तन्मात्राणाञ्च तामसादहङ्कारादुत्पत्तिः। तैजसाहङ्कारस्तु सत्त्वतमसोः क्रियोत्पादनद्वारेण द्विविधकार्य्योत्पत्तिप्रयोजकः, न तु स्वतोऽपि हेतुरिति। मनस उभयेन्द्रियत्वसाधकानुमानप्रयोगो यथा,—मनो ज्ञानेन्द्रियं ज्ञानेन्द्रियकार्य्यजनकसंयोगाश्रयत्वात् चक्षुरादिवत्। मनः कर्म्मेन्द्रियं कर्म्मेन्द्रियकार्य्यजनकसंयोगाश्रयत्वात् वागिन्द्रियवत् इति प्राहुः। एतेन प्रयोगेन मनसि ज्ञानेन्द्रियत्वस्य कर्म्मेन्द्रियत्वस्य च सिद्धा उभयात्मकत्वमव्याहतम्।

কার্য্যের হেতু। কূর্ম্মপুরাণে কথিত আছে,—সাত্ত্বিক রাজসিক ও তামসিক এই তিন প্রকার অহঙ্কার মহত্তত্ত্ব হইতে উৎপন্ন হইল, রাজসিক অহঙ্কার হইতে ইন্দ্রিয়গুলি এবং বৈকারিক, অর্থাৎ সাত্ত্বিক অহঙ্কার হইতে ইন্দ্রিয়াধিষ্ঠাত্রী দশ দেবতা ও স্বগুণে উভয়াত্মক মন উৎপন্ন। তামস অহঙ্কার হইতে পঞ্চভূততন্মাত্র ও উহা হইতে প্রজাগণ উৎপন্ন।

বৈকারিক অর্থ সাত্ত্বিক। তৈজস অর্থ রাজসিক। 'স্বগুণেন' পদের অর্থ—ইন্দ্রিয়বৃত্তিতে সাহায্যরূপ উৎকর্ষদ্বারা। উভয়াত্মক অর্থ জ্ঞানে-

इन्द्रियादीनि निरूप्यन्ते।—अहङ्कारादादौ मन उत्पद्यते ;—

'शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः।
रूपरागात् तथा चक्षुर्घ्राणं गन्धजिघृक्षया' ॥

इत्यादिना मोक्षधर्मादाविन्द्रियादीनां मनोवृत्तिरागादि-कार्य्यत्वश्रवणात्। ततश्चाहङ्कारात् सङ्कल्पपूर्वकं दशेन्द्रियाणि पञ्च तन्मात्राणि चोत्पद्यन्ते। इन्द्रियतन्मात्रयोश्च कार्य्यकारणभावस्याभावात् क्रमनियमो नास्ति (१७)। तत्रेन्द्रियेषु नास्त्यन्यान्तरकार्य्यकारणभाव: प्रमाणाभावात्।

---

(१७) अहङ्कारनिरूपणानन्तरं अहङ्कारकार्य्येन्द्रियनिरूपणमुपक्रमते। ननु किमिदमिन्द्रियत्वं नाम ? अहङ्कारकार्य्यत्वे सति ज्ञानकरणत्वमिन्द्रियत्वमिति वदाम:।

मनोवृत्तीत्यादि,—तथाहि मनोवृत्तिभूतस्य रागस्य इन्द्रियं प्रति कारणत्वेन कारणो-त्तरमेव कार्य्यस्य उत्पत्तिनियमात् मनोवृत्तिरागस्य इन्द्रियात् पूर्व्वं सत्त्वमपेक्षितमेव, तथैव स्ववृत्तिं प्रति स्वस्य कारणताया अपि आवश्यकत्वेन मनोवृत्तिरागपूर्व्ववर्त्तित्वमपि मनस: अपेक्षितमिति मनस: इन्द्रियात् पूर्व्वमुत्पत्तिरावश्यकीति भाव:।

इन्द्रियतन्मात्रयोश्चेत्यादि ;—तथाहि यथा मनोरागेन्द्रिययो: कार्य्यकारणभावमपेक्ष्य पौर्व्वापर्य्यनिर्णय: कृत:, न तथा इन्द्रियतन्मात्रयोरिति भाव:। क्रमनियम इति पौर्व्वापर्य्यनियम इत्यर्थ:।

---

ন্দ্রিয় ও কর্ম্মেন্দ্রিয় উভয়াত্মক। "অন্যত্রমনাঃ" ইত্যাদি শ্রুতিদ্বারা মন যে জ্ঞানেন্দ্রিয় ও কর্ম্মেন্দ্রিয় উভয় ইন্দ্রিয়ের সহকারী ইহা সিদ্ধ হয়। একাদশ ইন্দ্রিয়ের দেবতা,—দিক্ বাত, অর্ক, প্রচেতাঃ, অশ্বী, বহ্নি, ইন্দ্র, উপেন্দ্র, মিত্র ও চন্দ্র। এইরূপে অহঙ্কারের নিরূপণ করা হইল।

১৭ অনু। ইন্দ্রিয়াদি নিরূপণ করা যাইতেছে।—অহঙ্কার হইতে প্রথমতঃ মনের উৎপত্তি হয়। যেহেতু অহঙ্কারোপাধি জীবের শব্দবিষয়ক রাগ হইতে শ্রোত্র, রূপবিষয়ক রাগ হইতে চক্ষুঃ, গন্ধবিষয়ক রাগ হইতে

तन्मात्रेषु त्वस्ति। स यथा शब्दतन्मात्राद् वक्ष्यमाण-क्रमेण स्पर्शतन्मात्रं शब्दस्पर्शोभयगुणकम्, एवं क्रमेणैकैकगुण-वृद्ध्या परतन्मात्रत्रयं पूर्वपूर्वतन्मात्रेभ्य उत्पद्यते, पातञ्जलभाष्ये तन्मात्रेषु क्रमेणैकैकगुणवृद्धिवचनात्। ततश्च तन्मात्रेभ्यः पञ्च भूतानि जायन्ते। तत्राहङ्कारात् पञ्चतन्मात्राणां तद्द्वारा भूतानां चोत्पत्तौ क्रमः कूर्मविष्ण्वादिपुराणेषूक्तः; यथा कूर्मे—

'भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज ह।
आकाशं सुषिरं तस्मादुत्पन्नं शब्दलक्षणम्॥

---

(१८) ननु मास्तु इन्द्रियतन्मात्रयोरुत्पत्तौ परस्परं क्रमनियमः, इन्द्रियाणामुत्पत्तौ क्रमोऽस्ति न वा इत्याशङ्कायामाह तत्रेन्द्रियेष्वित्यादि। अवान्तरकार्य्यकारणभावः परस्परं कार्य्यकारणभावः। तथाहि इन्द्रियेषु एकमपरं प्रति न कारणमिति भावः। अत एव कार्य्यकारणभावाभावात् नास्ति तेषामपि पौर्व्वापर्य्यनियम इति भावः।

तन्मात्रेष्वित्यादि, अस्तीति अवान्तरकार्य्यकारणभाव इति शेषः। अतस्तत्र तन्मात्रेषु पौर्व्वापर्य्यनियमोऽपि सिद्ध एवेति भावः।

अवान्तरकार्य्यकारणभावं दर्शयति स यथा इत्यादिना। वक्ष्यमाणक्रमेणेत्यादि 'भूतादिस्तु विकुर्व्वाण' इत्यादि स्वोद्धृतकूर्म्मवचनक्रमानुसारेणेत्यर्थः। ननु एवमेकैकगुण-

---

ঘ্রাণেন্দ্রিয়' ইত্যাদি সন্দর্ভদ্বারা মোক্ষধর্ম্মাদিতে ইন্দ্রিয়াদিকে মনোবৃত্তি রাগাদির কার্য্য বলিয়া উক্ত দেখা যায়।

অনন্তর অহঙ্কার হইতে সঙ্কল্পপূর্ব্বক দশ ইন্দ্রিয় ও পঞ্চ তন্মাত্র উৎপন্ন হয়। ইন্দ্রিয় ও তন্মাত্রের কার্য্যকারণভাব নাই বলিয়া পৌর্ব্বাপর্য্যেরও নিয়ম নাই।

১৮ অনু। তন্মধ্যে আবার ইন্দ্রিয়গুলির অবান্তর পরস্পর কার্য্যকারণভাব নাই, কারণ তদ্বিষয়ে কোনও প্রমাণ পাওয়া যায় না। পঞ্চ-

আকাশস্তু বিকুর্ব্বাণঃ স্পর্শমাত্রং সসর্জ্জ হ।
বায়ুরুৎপদ্যতে তস্মাৎ তস্য স্পর্শো গুণো মতঃ॥'

ইত্যাদিক্রমেণেতি (১৮)।

নন্বেবমাকাশাদিভূতচতুষ্টয়স্যাপি তত্ত্বান্তরারম্ভকত্বেন প্রকৃতিত্বাপত্ত্যা কেবলবিকৃতিত্বসিদ্ধান্তক্ষতিরিতি চেন্ন; আকাশাদীনাং স্পর্শাদিতন্মাত্রেষ্বহঙ্কারোপষ্টম্ভমাত্রেণ কারণত্বস্য

---

ইত্থং পরস্পরং কার্য্যকারণভাবেন তন্মাত্রসৃষ্টিঃ কিং স্বকপোলকল্পিতা অপ্রমাণা বেত্যাকাঙ্ক্ষায়ামাহ—পাতঞ্জলভাষ্য ইত্যাদি। তথাহি ব্যাসদেবেনাপি তথৈব নির্দ্ধারিতমিতি নেদমপ্রমাণমিতি ভাবঃ। ভূতাদিরিতি তামসাহঙ্কারঃ। বিকুর্ব্বাণঃ ক্ষুভিতঃ। শব্দমাত্রং শব্দতন্মাত্রম্। সুষিরং অবকাশলক্ষণম্। স্পর্শমাত্রং স্পর্শতন্মাত্রম্। ইত্যাদিক্রমেণেতি ইত্যাদিবচনোক্তক্রমানুসারেণেত্যর্থঃ।

(১৯) সাংখ্যনয়ে কিল 'মূলপ্রকৃতিরবিকৃতির্মহদাদ্যাঃ প্রকৃতিবিকৃতয়ঃ সপ্ত। ষোড়শকস্তু বিকারো ন প্রকৃতির্ন বিকৃতিঃ পুরুষঃ'। ইতি কারিকানিরুক্ত-প্রকৃতিবিকৃতি-

---

তন্মাত্রের পরস্পর কার্য্যকারণভাব আছে; তাহা এইরূপ,—শব্দতন্মাত্র হইতে বক্ষ্যমাণক্রমে স্পর্শতন্মাত্র, উহার শব্দ ও স্পর্শ উভয়গুণ। এইরূপ এক এক গুণের বৃদ্ধিক্রমে অপর তিনটী তন্মাত্র পূর্ব্ব পূর্ব্ব তন্মাত্র হইতে উৎপন্ন হয়। পাতঞ্জলভাষ্যে তন্মাত্রের ক্রমে একৈক গুণবৃদ্ধির কথা উক্ত হইয়াছে। অনন্তর পঞ্চ তন্মাত্র হইতে পঞ্চ মহাভূত উৎপন্ন হয়। তন্মধ্যে অহঙ্কার হইতে পঞ্চতন্মাত্রের ও তদ্দ্বারা পঞ্চমহাভূতের উৎপত্তির ক্রম কূর্ম্মপুরাণ বিষ্ণুপুরাণ প্রভৃতিতে উক্ত হইয়াছে। কূর্ম্মপুরাণে যথা, ভূতাদি অর্থাৎ তামস অহঙ্কার বিকৃত হইয়া শব্দলক্ষণ শূন্যময় আকাশ সৃষ্টি করে। আকাশ বিকৃত হইয়া স্পর্শতন্মাত্র সৃষ্টি করে। উহা হইতে বায়ুর উৎপত্তি হয়। তাহার গুণ স্পর্শ। ইত্যাদি।

পুরাণেষূক্তত্বাদিতি। তদেবং ত্রয়োবিংশতিতত্ত্বানামুৎপত্তি-
রুক্তা ॥ (১৯)

তত্র পঞ্চ ভূতানি বর্জ্জয়িত্বা অহঙ্কারং চ বুদ্ধৌ প্রবিশ্য সপ্ত-
দশকং লিঙ্গশরীরসংজ্ঞং ভবতি; বহ্নেরিন্ধনবদাত্মনোঽভিব্যক্তি-
স্থানত্বাৎ। তচ্চ সর্ব্বপুরুষাণাং সর্গাদাবুৎপদ্য প্রাকৃতপ্রলয়পর্য্যন্তং
তিষ্ঠতি। তেনৈব চেহলোকপরলোকয়োঃ সংসরণং জীবানাং ভবতি।
প্রাণাস্তু বুদ্ধেরেব বৃত্তিভেদ ইত্যতো ন লিঙ্গশরীরাৎ পৃথঙ্ নির্দি-
শ্যতে। তস্য লিঙ্গশরীরস্য সূক্ষ্মাণি পঞ্চ ভূতান্যাশ্রয়ঃ চিত্রাদি-
বদাশ্রয়ং বিনা পরমসূক্ষ্মস্য লোকান্তরগমনাসম্ভবাৎ। ইদঞ্চ

---

বিভাগস্য সিদ্ধতয়া তদ্বিরোধ আপদ্যেত ইত্যাশঙ্কায়াহ নন্বেবমিত্যাদি। উক্তনয়ে—
প্রকৃতিত্বং তত্ত্বান্তরোপাদানত্বম্। তদত্র আকাশাদিষু ন তথা কারণত্বং, পরম্ অহঙ্কার-
স্যৈব তথাত্বম্, আকাশাদেস্তু সহকারিতামাত্রমিতি প্রতিপত্তব্যম্।

(২০) অথেদানীং ভোগসাধনং লিঙ্গশরীরং নির্ব্বক্তি তত্রেত্যাদিনা। পঞ্চ ভূতানি
স্থূলভূতানি। বুদ্ধৌ প্রবিশ্যেতি,—এতন্নয়ে কার্য্যকারণয়োরভেদেন তদ্বিবক্ষামপেক্ষ্য
ইত্যর্থঃ। অন্যত্র পুনঃ কার্য্যকারণয়োর্ভেদবিবক্ষা ন ক্রনেতি সপ্তদশসংখ্যায়া নানুপপত্তিঃ।
ননু কথমস্য লিঙ্গশরীরমিতি সংজ্ঞা ইত্যাকাঙ্ক্ষায়ামাহ বহ্নেরিত্যাদি। তথাহি যথা
ইন্ধনং বিনা বহ্নেরনুপলম্ভাৎ ইন্ধনং বহ্নিলিঙ্গং, তথৈব সূক্ষ্মশরীরং বিনা আত্মনোঽভি-
ব্যক্তিবিরহাৎ সূক্ষ্মশরীরমপি লিঙ্গসংজ্ঞাং ভজত ইতি লিঙ্গশরীরমিদম্। ননু তদিদং

---

১৯ অনু। এখন আপত্তি হইতেছে এই যে, উক্তরূপে আকাশাদি ভূতচতুষ্টয়ও তত্ত্বান্তরের আরম্ভক হওয়ায় উহাতে প্রকৃতিত্বের আপত্তি হেতু কেবল বিকৃতিত্বসিদ্ধান্ত নষ্ট হইয়া যায়। তাহার উত্তরে বলিতেছেন যে, না, তাহা নহে। কারণ আকাশাদিকে পুরাণে যে কারণ বলা হইয়াছে, উহা অহঙ্কারের উপষ্টম্ভমাত্রে স্পর্শাদির প্রতি কারণ বলা হইয়াছে। এইরূপে ত্রয়োবিংশতিতত্ত্বের উৎপত্তি বর্ণিতহইল।

लिङ्गशरीरमादौ स्वयम्भुव उपाधिभूतमेकमेव जायते; तस्यैव विराडाख्यवक्ष्यमाणस्थूलशरीरवत्। ततश्च व्यष्टि-जीवानामुपाधिभूतानि व्यष्टिलिङ्गशरीराणि तदंशभूतानि ततो विभज्यन्ते; पितुर्लिङ्गशरीरात् पुत्रलिङ्गशरीरवत्। तदुक्तं सूत्रकारेण, 'व्यक्तिभेदः कर्म्मविशेषा'दिति। मनुनाप्युक्तम्।—

'तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम्।
सन्निवेश्यात्ममात्रासु सर्व्वभूतानि निर्म्ममे' ॥ इति।

---

लिङ्गशरीरं कदा समुत्पद्यते, कियत्कालञ्च भ्रियत इत्याकाङ्क्षायामाह तच्चेत्यादि। सर्गादौ सृष्टेरादौ। प्राकृतप्रलयपर्य्यन्तं विवेकज्ञानपर्य्यन्तमित्यर्थः। तदनन्तरं पुनः पुरुषस्य संसरणाभावात् नास्ति तदा तदपेक्षेति भावः।

ये तु 'पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्ग-मुच्यते'। इति स्मृतिवचनानुसारेण सूक्ष्मशरीरस्य पञ्चप्राणमयत्वमपि कथयन्ति, तन्मतं प्रतिषेद्धुमाह प्राणेत्यादि। तथाहि प्राणादिपञ्चकस्य बुद्धिवृत्तितया बुद्ध्यतिरेकात् ततः पृथक्तया तस्य निर्द्देशानर्हत्वादिति भावः। पञ्चतन्मात्राणि परित्यज्य प्राणादि-पञ्चकघटितं लिङ्गशरीरमिति नान्यथापि शक्यं वक्तुमित्याह तस्येत्यादिना। तथाहि यथा—'आश्रयभूतं भित्त्यादिकं विना सूक्ष्मं चित्रमवस्थातुं न शक्नोति, नापि स्थानान्तर-मुपगन्तुं पारयति, तथैव पञ्चभूतानि आश्रयभूतानि विना लिङ्गशरीरमवस्थातुं लोकान्तरं वा गन्तुं नालं भवतीति भावः। न हि स्थूलशरीरं परलोकाय व्रजति, परं सूक्ष्मशरीरमेव

---

২০। তন্মধ্যে পঞ্চভূতকে বাদ দিয়া অহঙ্কারকে বুদ্ধিতত্ত্বের মধ্যে নিবেশ করিয়া সপ্তদশ পদার্থ লিঙ্গশরীর সংজ্ঞা ধারণ করে। বহ্নির যেমন ইন্ধন প্রকাশস্থান, এইরূপ উক্ত লিঙ্গশরীর আত্মার অভিব্যক্তির স্থান বলিয়া উহাকে লিঙ্গশরীর বলা হয়। উক্ত লিঙ্গশরীর সর্ব্বপুরুষের সৃষ্টির আদিতে উৎপন্ন হইয়া প্রাকৃতপ্রলয় পর্য্যন্ত অবস্থান করে। উহা দ্বারাই জীব ইহলোক ও পরলোকে যাতায়াত করিয়া থাকে। প্রাণ

ষণ্ণামিতি ষড়িন্দ্রিয়ং সমস্তশরীরোপলক্ষকম্। তথা চ স্বয়ম্ভূঃ স্বলিঙ্গশরীরাবয়বান্ সূক্ষ্মান্ অল্পান্ আত্মমাত্রাস্থ স্বাংশচেতনেষু সংযোজ্য সর্ব্বপ্রাণিনঃ সসর্জ্জেত্যর্থঃ। (২০)

লিঙ্গশরীরং নিরূপিতম্।

—o—

হি তত্, যত্ পরলোকায় প্রস্থিতং দেহান্তরমবলম্ব্য ভোগং লভত ইতি ভাবঃ। তদংশভূতানি সমষ্টিলিঙ্গশরীরাংশভূতানীত্যর্থঃ। তত ইতি সমষ্টিলিঙ্গশরীরাদিত্যর্থঃ। পিতুরিত্যাদিঃ দৃষ্টান্তঃ। তথাহি যথা একস্মাদেব পিতুর্লিঙ্গশরীরাত কর্ম্মানুসারেণ পুত্রকন্যাদিলিঙ্গশরীরাণি বহূনি সমুত্পদ্যন্তে, তথৈব সকলজীবপিতৃভূতস্য হিরণ্যগর্ভস্য সমষ্টিভূতাদেকস্মাদেব লিঙ্গশরীরাত্ ব্যষ্টিজীবানামুপাধিভূতানি নানা লিঙ্গশরীরাণি সমুত্পদ্যন্ত ইতি ভাবঃ।

---

বুদ্ধিতত্ত্বেরই বৃত্তিভেদমাত্র, এইজন্য উহা লিঙ্গশরীর হইতে পৃথক্‌রূপে নির্দ্দিষ্ট হয় নাই। সূক্ষ্ম পঞ্চভূত উক্ত লিঙ্গশরীরের আশ্রয়। কারণ চিত্রাদির ন্যায় আশ্রয় ব্যতিরেকে পরম সূক্ষ্মবস্তুর লোকান্তর গমন অসম্ভব হয়। এই লিঙ্গশরীর প্রথমতঃ স্বয়ম্ভুর উপাধিরূপে একমাত্র উৎপন্ন হয়। উক্ত স্বয়ম্ভুর বিরাট্‌নামক বক্ষ্যমাণ স্থূলশরীরের ন্যায়। অনন্তর ব্যষ্টিজীবের উপাধি তাহার অংশভূত ব্যষ্টিলিঙ্গশরীর সমষ্টিলিঙ্গশরীর হইতে বিভক্ত হয়। যেমন পিতার লিঙ্গশরীর হইতে পুত্রের লিঙ্গশরীর উৎপন্ন হইয়া থাকে। উহাই সূত্রকার বলিয়াছেন যে, 'কর্ম্মবিশেষহেতু ব্যক্তিভেদ হইয়া থাকে'। মনুও বলিয়াছেন,—(সমস্ত লিঙ্গশরীরের) সূক্ষ্ম অবয়বগুলি আত্মমাত্রাতে সন্নিবিষ্ট করিয়া পঞ্চভূত নির্ম্মাণ করেন। উক্ত বচনে যে 'ষণ্ণাং' বলা হইয়াছে, উহা সমস্ত লিঙ্গশরীরের উপলক্ষণ। অর্থাৎ স্বয়ম্ভু নিজ লিঙ্গশরীরের সূক্ষ্ম অল্পমাত্র অবয়বগুলিকে স্বীয় অংশ চেতনে সংযুক্ত করিয়া সকল প্রাণী সৃষ্টি করিয়াছেন।

লিঙ্গশরীর নিরূপিত হইল।

स्थूलशरीरोत्पत्तिरुच्यते। दशगुणितमहत्तत्त्वमध्येऽहङ्कारो, अहङ्कारस्यापि दशगुणितस्य मध्ये व्योम, व्योम्नोऽपि दशगुणितस्य मध्ये वायुः, वायोरपि दशगुणितस्य मध्ये तेजः, तेजसोऽपि दशगुणितस्य मध्ये जलं, जलस्यापि दशगुणितस्य मध्ये पृथिवी समुत्पद्यते, सैव स्थूलशरीरस्य बीजम्। तदेव च पृथिवीरूपं बीजमण्डरूपेण परिणमते। तस्यापि दशगुणितस्याण्डरूपस्य पृथिव्यावरणस्य मध्ये चतुर्दशभुवनात्मकं स्वयम्भुवः स्थूलशरीरं तत्सङ्कल्पादेवोत्पद्यते। तेनैव शरीरेण स्वयम्भूर्नारायण इत्युच्यते। तदुक्तं मनुना स्वयम्भुवं प्रकृत्य,—

'सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु बीजमवासृजत्॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥

---

(२१) अथ स्थूलशरीरोत्पत्तिनिरूपणं प्रतिजानीते स्थूलेत्यादिना। महत्तत्त्वादिकमुत्तरोत्तरकार्यभूताहङ्काराद्यपेक्षया दशगुणितमभ्युपेयं, अन्यथा समुत्पत्तौ महत्त्वादीनां निरुक्ताधिकरणत्वस्यासम्भवात्। सैवेत्यादिः निरुक्ता पृथिवीत्यर्थः। बीजमिति उपादानकारणमित्यर्थः। अण्डरूपेणेति हिरण्मयाण्डरूपेणेत्यर्थः। तत्संकल्पादिति स्वयम्भुवः सङ्कल्पादित्यर्थः। मनुवाक्यमत्रार्थे प्रमाणयति सोऽभिध्यायेत्यादि। सः समष्टिसूक्ष्मशरीरावच्छिन्नः हिरण्यगर्भः विविधाः नानाविधाः प्रजाः जीवान्

---

২১ অনু। স্থূল শরীরের উৎপত্তির কথা বলা হইতেছে,—দশগুণ অধিক মহত্তত্ত্বমধ্যে অহঙ্কার, দশগুণ অধিক অহঙ্কারের মধ্যে ব্যোম, দশগুণ অধিক ব্যোমের মধ্যে বায়ু, দশগুণ অধিক বায়ুর মধ্যে তেজ, দশগুণ অধিক তেজের মধ্যে জল, দশগুণ অধিক জলের মধ্যে পৃথিবী

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्त्ता स भूतानां ब्रह्माऽग्रे समवर्त्तत ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्व्वं तेन नारायणः स्मृतः ॥' इत्यादिनेति (२१)

---

सिसृक्षुः जगत् स्रष्टुमिच्छुः, अभिध्याय इच्छामात्रेण, स्वात् शरीरात् स्वीयप्रधानादिरूपात् अविभक्तात् शरीरादित्यर्थः । आदौ सकलसृष्टेः पूर्व्वं अपः जलम् एव ससर्ज । तासु अप्सु बीजं अवासृजत् निहितवान्, तच्च बीजं सहस्रांशुसमप्रभं सूर्य्यसङ्काशम् अण्डं हैजसम् अण्डमभवत् ; तेन बीजेन पृथिवीरूपेण तेजसः संसर्गात् हिरण्मयमण्ड जातं इति भावः । सर्व्वलोकेत्यादिः सकलजीवजनक इत्यर्थः । स वै इत्यादिः, ततः पूर्व्वं शरीरोत्पत्त्यभावात् तस्यैव शरीरिणः ब्रह्मणः प्रथमशरीरित्वमिति भावः । तस्मिन्नेव ब्रह्मणि प्रयुक्तस्य नारायणशब्दस्य अर्थविशेषमाह आपो नारा इत्यादिना । नरस्य नरशब्दप्रतिपाद्यस्य परमात्मनः परमेश्वरस्य इत्यर्थः । सूनवः सन्तानभूताः । तत एव परमात्मनः आदौ जलस्य जातत्वादिति भावः । ताः आपः । अस्य ब्रह्मस्वरूपतामापन्नस्य भगवतः परमेश्वरस्य इत्यर्थः । अयनं आश्रयः, तत्रैव जाते हिरण्मयाण्डे तस्य ब्रह्मरूपेण जातत्वादित्यर्थः ।

---

উৎপন্ন হয়। উহাই স্থূলশরীরের বীজ। উক্ত পৃথিবীরূপ বীজই অণ্ডরূপে পরিণত হয়। উক্ত দশগুণিত অণ্ডরূপ পৃথিব্যাবরণের মধ্যে চতুর্দ্দশভুবনাত্মক স্বয়ম্ভূর স্থূলশরীর তৎসঙ্কল্পবশতই উৎপন্ন হয়। উক্ত শরীর দ্বারাই স্বয়ম্ভূ নারায়ণনামে কথিত হন। মনু স্বয়ম্ভূ বিষয়ে বলিয়াছেন,—বিবিধ প্রজা সৃষ্টি করিবার কামনায় সঙ্কল্পপূর্ব্বক নিজ শরীর হইতে প্রথমতঃ ভগবান্ জল সৃষ্টি করেন, পরে তাহাতে বীজ নিহিত করেন। উক্ত বীজ সহস্রাংশুতুল্য দীপ্ত হিরণ্ময় অণ্ডাকারে পরিণত হয়। তাহাতেই সর্ব্বলোকপিতামহ ব্রহ্মা উৎপন্ন হন। তিনিই প্রথম শরীরী ও পুরুষ বলিয়া উক্ত হন। তিনিই ভূতগণের প্রথম স্রষ্টা, তিনিই

तत एव च आदिपुरुषात् व्यष्टिपुरुषाणां विभागादन्ते च तत्रैव लयात् स एव चैक आत्मेति श्रुतिस्मृत्योर्व्यवह्रियते। अतो न व्यवहारपरतया नारायण एव सर्व्वभूतानामात्मेति श्रुतिस्मृतिविरोध इति। ततश्च स नारायणो विराट्छरीरो स्वनाभिकमलकर्णिकास्थानीयस्य सुमेरोरुपरि चतुर्मुखाख्य-स्वयम्भुवं सृष्ट्वा तद्द्वाराऽन्यानपि व्यष्टिशरीरिणः स्थावरान्तान् ससर्ज्ज। तथा च स्मर्य्यते,—

'तच्छरीर-समुत्पन्नैः कार्य्यैस्तैः कारणैः सह।
चेतज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः'॥ इति (२२)

---

(२२) ननु यदि एकस्मात् परमात्मनो बहूनां जीवानामुद्भवः, तदा कथं श्रुति-स्मृत्योः गीयमानमात्मैकत्वमुपपद्यत इत्याशङ्कायामाह तत एवेत्यादि। आदि-पुरुषादिति समष्टिसूक्ष्मशरीरावच्छिन्नात् ब्रह्मरूपेण परिणतात् परमात्मनः। व्यष्टि-पुरुषाणां व्यष्टिसूक्ष्मशरीरावच्छिन्नजीवानामित्यर्थः।

तत्रैव लयादित्यादिः,—तथाहि अस्मिन् सांख्यनये कारणलयस्यैव विनाशपदवाच्य-तया यस्मादेव व्यष्टिपुरुषाणामुद्भवः तत्रैव अन्ते लयः सुतरामुच्छ्रत इति आदौ अन्ते च आत्मन एकत्वमित्यभिप्रायः। तद्द्वारेति स्वयम्भूद्वारेत्यर्थः। तच्छरीरसमुत्पन्नैः तस्य समष्टिशरीरिणः विराड़ाख्यशरीरादुत्पन्नैरित्यर्थः। चेतज्ञाः व्यष्टिशरीरिणः जीवा इत्यर्थः। धीमतः बुद्धिमतः। एतेन बुद्धिपूर्व्वकमेव भगवता सर्वेषां सृष्टिरिति ध्वन्यते।

---

অগ্রে বর্ত্তমান। 'নার' শব্দে জল কথিত হয়, উক্ত জলই প্রথমতঃ ব্রহ্মার আশ্রয়স্থান বলিয়া তাহাকে নারায়ণও বলা হয়।

২২ অনু। সেই আদিপুরুষ হইতেই ব্যষ্টি পুরুষের বিভাগ ও অন্তে তাহাতেই লয় হওয়ায় তিনিই একমাত্র আত্মা ইহা শ্রুতি ও স্মৃতিতে ব্যবহৃত হয়। অতএব ব্যবহারহেতু নারায়ণই সর্ব্ব-

यत् तु शेषशायिनो नारायणस्य नाभिकमलस्थोत्रचक्षु-रादिभ्यश्चतुर्मुखस्याविर्भावः श्रूयते, तद् दैनन्दिनसर्गेष्वेव कल्पभेदेन मन्तव्यम्। दैनन्दिनप्रलयेष्वेव हि नारायणशरीरे प्रविश्यैकीभूय सुप्तानां देवानां चतुर्मुखादिक्रमेणाविर्भावः शेषशायिनः सकाशाद् घटते, न त्वादिसर्गेषु। दैनन्दिनप्रलय एव लीलाविग्रहेण शयनादिति। तदेवं सङ्क्षेपतश्चतुर्विंशति-तत्त्वानि तेषां सृष्टिरूपं प्रयोजनं चोक्तम्। तत्र यद् यस्माज्-जायते, तस्य तदापूरणेनैव स्थितिः, ततस्तस्य संहारोऽपि तत्रैव भवति।

---

(२३) दैनन्दिनप्रलयेष्वेवेति—प्रलयश्चतुर्व्विधः नैमित्तिकः प्राकृतिक आत्य-न्तिको नित्यश्चेति आर्य्यपादाः प्राहुः। तदुक्तं 'नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको द्विज। नित्यश्च सर्व्वभूतानां प्रलयोऽयं चतुर्व्विधः। ब्राह्मो नैमित्तिकस्तत्र यच्छेते जगतः पतिः। प्रयाति प्राकृते चैव ब्रह्माण्डं प्रकृतौ लयम्' ॥ इति। उक्तञ्च 'यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति' ॥ इति। अत्र निमीलनमेव प्रलय इति मन्तव्यम्।

---

ভূতাত্মা এইরূপ শ্রুতি ও স্মৃতির কোনও রূপ বিরোধ নাই। অনন্তর সেই নারায়ণরূপ বিরাট্‌শরীরী নিজ নাভিকমলের কর্ণিকাস্থানীয় সুমেরুর উপরিভাগে চতুর্ম্মুখাখ্য ব্রহ্মাকে সৃষ্টি করিয়া তদ্দ্বারা অন্য স্থাবরান্ত শরীরীর সৃষ্টি করেন। স্মৃতিতে কথিত আছে,—'তদীয় শরীর হইতে উৎপন্ন কার্য্য ও কারণের সহিত চেতন পরমেশ্বরের গাত্র হইতে ক্ষেত্রজ্ঞ বা জীব উৎপন্ন হইয়া থাকে।

২৩ অনু। কেহ কেহ যে বলেন, শেষশায়ী নারায়ণের নাভিকমল শ্রোত্র চক্ষুরাদি হইতে চতুর্মুখ ব্রহ্মার আবির্ভাব, উহা দৈনন্দিন সৃষ্টিতে কল্পভেদে জানিবে। দৈনন্দিন প্রলয়েই নারায়ণশরীরে প্রবেশ করিয়া

'यद् यस्माज्जायते तत्त्वं तत् तत्र प्रविलीयते ।
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम्' ॥—

इति भारतादिभ्य इति । एते च सृष्टिस्थितिसंहाररूपाः स्थूला एव परिणामाश्चतुर्विंशतितत्त्वानां कूटस्थपुरुषविवेकाय प्रदर्शिताः ॥ (२२)

---

तदयमत्र निष्कर्षः—ब्रह्मणो निद्राप्रयुक्तः प्रलयो नैमित्तिकः । यदा ब्रह्माण्डस्य प्रकृतौ लयस्तदा स प्राकृतिकः । ज्ञानेन परमात्मनि योगिनः लयः आत्यन्तिकः । दीपशिखाया इव स्वातन्त्र्येण जातानां प्रात्यहिकविनाशो नित्य इति ।

तस्येति कार्य्यस्य तदापूरणेनैवेति कारणापूरणेनैवेत्यर्थः । तथोक्तं पतञ्जलिना योगसूत्रे 'जात्यन्तरपरिणामः प्रकृत्यापूरा'दिति ।

कूटस्थेति—कूटः अयोघनवत् निश्चलः तिष्ठति यः स कूटस्थः निष्क्रिय इत्यर्थः । तादृशस्य पुरुषस्य विवेकाय भेदप्रतिपत्तये । प्रकृतिप्रतियोगिक-तादृशपुरुषानुयोगिक-भेदज्ञानस्यैव परमपुरुषार्थसाधकत्वादिति भावः ।

---

একীভূত হইয়া সুপ্তদেবতাগণের চতুর্মুখাদিক্রমে শেষশায়ী নারায়ণের নিকট হইতে আবির্ভাব ঘটিয়া থাকে, কিন্তু আদি সৃষ্টিতে নহে। কারণ দৈনন্দিনপ্রলয়েই লীলাবিগ্রহ ধারণ করিয়া নারায়ণ শয়ন করিয়া থাকেন।

এইরূপে সঙ্ক্ষেপতঃ চতুর্ব্বিংশতিতত্ত্ব ও তাহার সৃষ্টিরূপ প্রয়োজন বলা হইল। যাহা হইতে যাহার উৎপত্তি হয়, তাহাকে পূরণ করিয়াই আবার উহার স্থিতি এবং অনন্তর তাহার সংহারও তাহাতেই হইয়া থাকে। উক্ত বিষয় ভারতাদি হইতে প্রতীত হয়, যথা,—'যে তত্ত্ব যাহা হইতে উৎপন্ন হয়, সেই তত্ত্ব তাহাতেই লয় প্রাপ্ত হয়। প্রতিলোমভাবে লয়প্রাপ্ত ও অনুলোমভাবে উত্তরোত্তর উৎপন্ন হইয়া থাকে'। এই সৃষ্টি স্থিতি সংহাররূপ চতুর্ব্বিংশতিতত্ত্বের স্থূল পরিণাম কূটস্থ পুরুষ-বিবেকার্থ প্রদর্শিত হইল।

सूक्ष्मा अप्यन्ये प्रतिक्षणपरिणामा एतेषां स्मर्य्यन्ते । यथा,—

नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च ।
कालेनाऽलक्ष्यवेगेन सूक्ष्मत्वात् तन्न दृश्यते ॥ इति ।

अतश्च सर्वं जड़वस्तु परमार्थतः सर्वदैवाऽसदुच्यते । ततश्च तस्माद् विरज्यात्मैव परमार्थसत्यो दुःखभीतमिद्भिर्द्रष्टव्यः । तदुक्तमनुगीतायाम्—

'अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहङ्कारविटप इन्द्रियाङ्कुरकोटरः ।

---

(२४) प्रतिक्षणपरिणामा इति—सांख्यनये 'नापरिणम्य क्षणमप्यवतिष्ठन्ते गुणा' इति सिद्धान्तोऽत्र स्मरणम् । नित्यदेत्यादिः—अलक्ष्यवेगेन कालेन नित्यदा सर्व्वदा, अङ्गेति सम्बोधनपदम् । भूतानि भवन्ति उत्पद्यन्ते, न भवन्ति विनश्यन्ति च । प्रतिक्षणमेव परिणतिमापद्यन्त इत्यर्थः । ननु यद्येवं भूतानां प्रतिक्षणमेव परिणामस्तदा स कथं नोपलक्ष्यत इत्याकाङ्क्षायामाह सूक्ष्मत्वादित्यादि । सूक्ष्मत्वात् दुरूहत्वात् तत् प्रतिक्षणजायमानमुत्पत्तिविनाशरूपं वस्तु इत्यर्थः । न दृश्यते नोपलक्ष्यते । अत इति वस्तूनां प्रतिक्षणपरिणामितया स्थैर्य्याभावादित्यर्थः । एतेन आत्मव्यतिरिक्तस्य जगत्प्रपञ्चस्यास्य सर्व्वस्य न ध्वंसप्रसङ्गादितुच्यता, परं प्रतिक्षणपरिणामितया अस्थैर्य्यात् असत्त्वोक्तिरिति भावः

---

২৪ অনু। এই চতুর্ব্বিংশতিতত্ত্বের অপর সূক্ষ্ম প্রতিক্ষণপরিণামগুলিও স্মরণ করা যাইতেছে। যথা,—অলক্ষ্যবেগ কালপ্রভাবে প্রতিমুহূর্ত্তেই ভূতসমূহ জন্মিতেছে ও লয়প্রাপ্ত হইতেছে। কিন্তু সূক্ষ্মতা হেতু ঐ প্রতিক্ষণপরিণাম দৃষ্ট হয় না। এইজন্যই সকল জড়বস্তু পরমার্থতঃ সর্ব্বদাই অসৎ বলিয়া কথিত হয়। অতএব উক্ত অসৎ বস্তু হইতে বিরক্ত হইয়া পরমার্থসত্য আত্মাকেই দুঃখভয়ে ভীত জীবগণ দর্শন করিবে। উক্ত বিষয় অণুগীতায় কথিত আছে,—'ব্রহ্মবৃক্ষ বলিয়া একটী সনাতন

মহাভূতপ্রশাখশ্চ বিশেষপ্রতিশাখবান্।
সদাপর্ণঃ সদাপুষ্পঃ শুভাশুভফলোদয়ঃ॥
আজীবঃ সর্ব্বভূতানাং ব্রহ্মবৃক্ষঃ সনাতনঃ।
এতজ্জ্ঞাত্বা চ তত্ত্বেন জ্ঞানেন পরমাসিনা।
ছিত্ত্বা চাক্ষরতাং প্রাপ্য জহাতি মৃত্যুজন্মনী॥২৪॥

ইতি শ্রীবিজ্ঞানভিক্ষুবিরচিতে সাংখ্যসারে বিবেকপ্রতিযোগিনাং
প্রকৃত্যাদীনাং স্বরূপপরিচ্ছেদঃ॥৩॥

ইতি সাংখ্যসারস্য পূর্ব্বভাগঃ।

---

তত ইতি,—সর্ব্বস্য জড়বস্তুনঃ তাদৃশাদসত্ত্বদোষাদিত্যর্থঃ। তস্মাদিতি জড়বস্তুন ইত্যর্থঃ। পরমার্থসত্যঃ অপরিণামিতয়া ইতি শেষঃ। দ্রষ্টব্য ইতি সাক্ষাৎকর্ত্তব্যঃ। তথাহি তদ্দর্শনস্যৈব সকলদুঃখবিনিবর্ত্তকতয়া মুক্তিসাধনত্বাৎ যোগিনাত্মনি প্রকৃতিভেদঃ প্রতিপত্তব্য ইতি ভাবঃ।

উক্তে বিষয়ে অনুগীতাবাক্যং প্রমাণয়তি অব্যক্তেত্যাদি। অব্যক্তং প্রকৃতিঃ—তস্য মূলকারণত্বাৎ বীজত্বেন রূপণম্। আজীবঃ আশ্রয়ঃ। সর্ব্বভূতানাং সর্ব্বপ্রাণিনাম্। সনাতনঃ নিত্যঃ। তত্ত্বেনেতি তৃতীয়ার্থঃ প্রকারত্বং তত্ত্বপ্রকারকজ্ঞানেন তত্ত্বজ্ঞানেনেত্যর্থঃ।

সাংখ্যসারস্য পূর্ব্বভাগটীকা সমাপ্তা॥

—০—

বৃক্ষ আছে, উক্ত বৃক্ষ প্রকৃতিরূপ বীজ হইতে উৎপন্ন। বুদ্ধিতত্ত্ব উহার স্কন্ধ, মহাহঙ্কার উহার বিটপ, ইন্দ্রিয়াঙ্কুর কোটর, মহাভূত প্রশাখা, বিশেষ প্রতিশাখা, উহাতে সর্ব্বদা পত্র ও পুষ্প বিরাজমান শুভ ও অশুভ এই দুইটী উহার ফল। উহা সর্ব্বভূতের জীবনোপায়। যথার্থরূপে উহা জানিয়া জ্ঞানরূপ পরম অসি দ্বারা উহা ছেদন করিয়া ব্রহ্মত্বলাভ করিলে জন্মমৃত্যু অতিক্রম করা যায়।

পূর্ব্বভাগে তৃতীয় পরিচ্ছেদ সমাপ্ত।



—০—

## सांख्यसारस्य उत्तरभागे

## प्रथमः परिच्छेदः

अथ शिष्यैः सुखेनैव ग्रहीतुं पद्यमालया ।
विवेकस्यानुयोग्यात्मा पुरुषाख्यो निरूप्यते ॥ १

तत्र सामान्यतः सिद्धो जानेऽहमिति धीबलात् ।
दृष्टान्तो नित्यविभ्वादिधर्मैरेव स साध्यते ॥ २

---

(१) अथ पूर्व्वभागे विज्ञानभिक्षुः परमपुरुषार्थमोक्षसाधनस्य प्रकृत्यादिविवेकज्ञानस्य अभ्यर्हितत्वमुक्त्वा पुरुषं विशेषेण निरूपयितुं पद्यमालया द्वितीयभागमारभते अथेत्यादिना । अथेति—सामान्यतः गद्येन सांख्यतत्त्वनिर्द्देशानन्तरम् इत्यर्थः । अथशब्दस्य मङ्गलसूचकतया आदौ मङ्गलसम्पत्तिरपि उपपादिता । ग्रहीतुमिति आयत्तीकर्त्तुमित्यर्थः । गद्यमयवस्त्वपेक्षया पद्यमयस्य वस्तुनः सुखेन धारणायाः सर्व्वसिद्धत्वात् । विवेकस्य प्रकृत्यादिजड़वर्गप्रतियोगिकस्य भेदस्य, अनुयोगी अनुयोगितारूपस्वरूपसम्बन्धाश्रयः, पुरुषाख्यः सांख्यशास्त्रीयपुरुषपरिभाषाविषयः आत्मा, निरूप्यते प्रतिपाद्यते । प्रकृत्यादिप्रतियोगिकभेदस्य आत्मनि विज्ञानेनैव मोक्षस्य सम्भवात् तादृशात्मस्वरूपनिरूपणमेव प्रकृते सप्रयोजनमिति भावः ।

निरूप्यत इत्यत्र भविष्यत्सामीप्ये वर्त्तमानाविभक्तिनिर्द्देशात् निरूपणे उत्तरकालीनत्वलाभेन प्रकृतवाक्यस्य प्रतिज्ञावाक्यत्वसिद्धिरिति ध्येयम् । शिष्यैरिति तृतीयायाः कर्त्तृत्वमर्थः, तच्च तुमन्तग्रहधातुप्रतिपाद्ये ग्रहणे अन्वेति ।

---

১ অনু। অনন্তর শিষ্যগণের অনায়াসে বোধসম্পাদনার্থ পদ্যমালা দ্বারা বিবেকের অনুযোগী অর্থাৎ প্রকৃত্যাদিভেদের অনুযোগী পুরুষসংজ্ঞক আত্মার নিরূপণ করা যাইতেছে।

भोक्ता नित्यस्तदर्थत्वात् तत्कर्मोत्पादितत्वतः।
महदादिविकाराणां सर्वेषामविशेषतः॥ ३

---

(२) ननु अहमिति प्रतीत्या आपामरसाधारण्या एव आत्मनः सिद्धेरलं पुन-रात्मनो निरूपणेनेत्याशङ्कयाह तवेति। 'अहं जाने' इति धीवलात् मानसप्रत्यचा-त्मकप्रतीतेः द्रष्टा ज्ञानाश्रयः आत्मा सामान्यतः सामान्यरूपेण देहाद्यविविक्ततये-त्यर्थः, सिद्धः। तथाहि 'अहं जाने' इति प्रतीत्या आत्मनि ज्ञानाश्रयत्वस्य उपस्थित्या अन्तःकरणाभेदेन आत्मा लभ्यते, सांख्यनये तु आत्मनि ज्ञानसुखाद्यभावेन न ततः स्वरूपतां विशिष्य आत्मलाभ इति प्रत्यक्षप्रमाणेन नेदं निरूपणं गतार्थमिति भावः। अतः अस्मात् हेतोः सामान्यत एव आत्मनः प्रत्ययादित्यर्थः। नित्यविभ्वादिधर्म्मैः स आत्मा साध्यते प्रतिपाद्यते। न चैवं निर्गुणस्य आत्मनः कथं नित्यत्वविभुत्व-प्रभृतयो गुणा इति वाच्यं निर्गुणपदस्य विशेषगुणराहित्यपरतायाः सिद्धान्तितत्वात्।

(३) अथ आत्मनो नित्यत्वे किं मानमित्याकाङ्क्षायामाह भोक्तेत्यादि। भोक्ता आत्मा पक्षः, नित्यत्वं साध्यं, अविशेषतः सर्व्वेषां महदादिविकाराणां तदर्थत्वं हेतुः, तदर्थत्वे च तत्कर्म्मोत्पादितत्वं हेतुः। तथाहि यत् यत्कर्म्मवशादुत्पन्नं तत् तदर्थ-मिति व्याप्त्या आत्मकर्म्मोत्पादितत्वं हेतूकृत्य साधितस्य तदर्थत्वस्य भोक्तरि नित्यत्व-साधने हेतुत्वमुपपन्नमिति भावः।

---

২ অনু। 'অহং জানে' অর্থাৎ 'আমি জানি' এইরূপ জ্ঞানবলে সামান্তরূপে আত্মার সিদ্ধি রহিয়াছে (অতএব সামান্তরূপে আত্মার সাধন এস্থানে করিতে হইবে না) কিন্তু নিত্যবিভুত্বাদি ধর্ম্ম দ্বারাই সেই দ্রষ্টা পুরুষের সাধন করা হইবে।

৩ অনু। মহদাদি সকল বিকার পদার্থ আত্মার কর্ম্মোপার্জ্জিত, অতএব উহা আত্মার্থ এইজন্য ভোক্তা আত্মা নিত্য।

अपि चादृष्टसंस्काराधारत्वाद् बीजरूपतः।
धीरनादिरतोऽस्याश्च सिद्धा भोक्तुरनादिता ॥ ४

स्वस्वामिभावानादित्वमृते भोक्तृव्यवस्थितेः।
स्वभुक्तावृत्तिसंस्कारवत्त्वं स्वत्वं तु बुद्धिषु ॥ ५

---

(४) ननु सृष्टेः पूर्व्वं बुद्धितत्त्वस्य अभावेन तद्भोक्तुरप्यसिद्ध्या कथं निरुक्तानुमानेन आत्मनो नित्यत्वमुपपद्येत इत्याशङ्क्याह अपि चेत्यादि। बीजरूपतः सूक्ष्मरूपतः अदृष्टसंस्काराधारत्वात् अदृष्टवत्त्वात् स्मृतिकारणीभूतभावनाख्यसंस्कारवत्त्वाच्च इत्यर्थः। अनादिः प्रागभावाप्रतियोगिनी उत्पत्तिरहितेति यावत्। धीः बुद्धिः सिद्धेति शेषः। तथाहि जन्यमात्रं प्रति अदृष्टस्य कारणतया अदृष्टस्य च बुद्धितत्त्वाश्रयतया प्रथमसृष्टेः प्रागपि कथञ्चित् बुद्धितत्त्वमङ्गीकर्त्तव्यमेव, अत एव तद्भोक्तृतया तदापि पुरुषस्यावश्यकत्वेन न प्रकृतानुपपत्तिरिति भावः। संस्काराधारतयापि स्मृत्युपपादिकया तथैव धियः अनादित्वमुपपादयितव्यमिति। बुद्धिर्नाम भोग्यस्वभावा तस्याश्च भोग्यत्वं भोक्तारं पुरुषं विना नोपपद्यत इति बुद्धेरनादितया पुरुषस्यापि अनादित्वमनुषङ्गसिद्धमिति भावः।

(५) अथ भोक्तुरनादितायां हेत्वन्तरमप्याह स्वस्वामीत्यादिना। स्वस्वामिभावः स्वत्वस्वामित्वे। ते च अस्य पुरुषस्य इयं बुद्धिः अस्या बुद्धेरयं पुरुष इत्यादिप्रतीतिसाक्षिकस्वरूपसम्बन्धविशेषौ। तन्निष्कर्षश्च परतः प्रतिपादयिष्यते। तस्य स्वस्वामिभावस्य अनादित्वं नित्यताम् ऋते भोक्तृव्यवस्थितेः अस्या बुद्धेरयं भोक्ता इति व्यवस्थाया असम्भवात् भोक्तुः अनादिता सिद्धेति पूर्व्वेणान्वयः कर्त्तव्यः। तथाहि भोक्तुः

---

৪ অনু। আরও অদৃষ্ট এবং সংস্কারের বীজরূপে আধার বলিয়া বুদ্ধিতত্ত্ব অনাদি অতএব তাহার ভোক্তা পুরুষেরও অনাদিতা সিদ্ধ হইয়া থাকে।

৫ অনু। পুরুষ ও মহত্তত্ত্বের যে পরস্পর স্বস্বামিভাব অনাদিসিদ্ধ

स्वाम्यं स्वनिष्ठसंस्कारहेतुवृत्तेश्च भोक्तरि ।
अतश्च घटते स्वत्वनाशे कैवल्यमात्मनः ॥ ६
भोक्तु स्याऽनादिभावस्य विनाशे हेत्वसम्भवात् ।
न नाशो भोक्तुरस्तीति भोक्ता नित्यो हि सिध्यति ॥ ७

---

भोग्यस्य च सत्त्व एव भोग्यभोक्तृवृत्तिस्वस्वामिभावस्य सम्भवात् तदभावे च तदभावात् स्वस्वामिभावस्य अनादितया भोक्तुरनादिता सिद्धेति भावः ।

स्वपदं भोक्तृपुरुषपरम् । स्वेन भोक्त्रा पुरुषेण भुक्ता या वृत्तिः तस्याः यः संस्कारः भावनाख्यः तद्वत्त्वं बुद्धिषु बुद्धितत्त्वेषु स्वत्वम् । तथाहि येन पुरुषेण या वृत्तिर्भुज्यते तस्याः संस्कारो यत्र सैव तस्य पुरुषस्य स्वीया बुद्धिरिति भावः । अतएव पुरुषविशेषबुद्धिविशेषयोः स्वस्वामिभावः समन्वेतीति बोध्यम् ।

(६) अथ ज्ञातं बुद्धिगतं स्वत्वं पुरुषगतं स्वामित्वन्तु कीदृशमित्याकाङ्क्षायामाह-स्वाम्यमित्यादि । अत्र प्रकाशकत्वमित्यध्याहर्त्तव्यम् । अन्यथा स्वाम्यस्य निरूपणासम्भवात् । तथाहि भोक्तरि पुरुषे स्वनिष्ठः बुद्धिनिष्ठः यः संस्कारः तद्वत्त्वं प्रकाशकत्वमेव स्वाम्यमिति अर्थः । एतेन यद्बुद्धिसंस्कारवृत्तिप्रकाशको यः पुरुषः तन्निरूपितं तत्-स्वाम्यमिति फलितम् ।

स्वत्वनाशे तादृशसंस्कारवत्त्वस्य अपगमे सति आत्मनः कैवल्यं स्वरूपप्रतिष्ठत्वम्-घटते । तथाहि बुद्धौ तदा संस्काराद्यभावेन आत्मनि प्रतिबिम्बपाताभावात् स्वरूपा-वस्थितिरेव तस्येति भावः ।

(७) ननु भोक्तुः पुरुषस्य अनादित्वेऽपि नाशप्रतियोगित्वेन कैवल्यसिद्धिरित्या-शङ्का समाधत्ते भोक्तुरित्यादिना । अनादिभावस्य प्रागभावाप्रतियोगिभावस्वरूपस्य

---

রহিয়াছে, উহার অনাদিত্ব ব্যতিরেকে ভোক্তৃত্বব্যবস্থা আত্মাতে অসম্ভব হয়। স্বভুক্তবৃত্তিসংস্কারবত্ত্বই বুদ্ধিতত্ত্বে স্বত্ব।

৬ অনু। স্বপ্রতিবিম্বিতসংস্কারজনক বৃত্তিপ্রকাশকত্বই আত্মার স্বামিত্ব। অতএব স্বত্বনাশে আত্মার কৈবল্য সম্ভব হয়।

জন্যো জ্ঞানপ্রকাশোঽস্য নিত্যত্বে তু ন যুজ্যতে।
ন হ্যপ্রকাশে কুত্রাপি প্রকাশোৎপত্তিরীষ্যতে ॥ ৮
কার্য্যং প্রকাশাখ্যগুণোঽবয়বানাং হি তদ্গুণঃ।
কারণং তেন নানিত্যঃ প্রকাশো নিত্যবস্তুনি ॥ ৯

---

ভোক্তুঃ পুরুষস্য বিনাশে ধ্বংসরূপাভাবে হেত্বসম্ভবাৎ কারণস্যাসম্ভবাৎ; তথাহি প্রাগভাবো নাম অনাদিরপি প্রতিযোগিনা জায়মানেন নশ্যতি, স হি অভাবো নাম। ভাবস্তু অনাদিঃ তথা কোঽপি পদার্থো নাস্তি যো বিনাশমুৎপাদয়েৎ। অতঃ ভোক্তুঃ বিনাশাভাবাৎ নিত্যতয়া তদা সংস্কারাদীনাং বুদ্ধৌ বিরহাচ্চ কৈবল্যমুৎপদ্যত এবেতি ভাবঃ।

(৮) আত্মনো জন্যজ্ঞানাদিমত্ত্বমঙ্গীকুর্ব্বতাং নৈয়ায়িকবৈশেষিকাদীনাং মতং নিরাকরোতি জন্য ইত্যাদিনা। অস্য আত্মনঃ নিত্যত্বে অজন্যত্বে জন্যঃ জ্ঞানপ্রকাশঃ ন যুজ্যতে। তথাহি আত্মনো নিত্যত্বেন এব জন্যজ্ঞানশূন্যত্বমিতি মন্তব্যম্। তথাহি যদি আত্মনঃ প্রকাশো জন্যঃ স্যাৎ, তদা তস্য কাদাচিৎকতয়া সার্ব্বদিকত্বাভাবেন আত্মনঃ স্বরূপতঃ অপ্রকাশস্বরূপত্বমাপততি, তচ্চ ন সম্ভবতি অপ্রকাশস্বরূপস্য প্রকাশস্বীকারে স্বভাবপ্রচ্যুতিদোষপ্রসঙ্গস্য দত্তহস্তাবলম্বত্বাদিতি ভাবঃ।

(৯) অথৈবং অপ্রকাশস্য প্রকাশোৎপত্ত্যস্বীকারে কথং প্রদীপাদেঃ প্রকাশোৎপত্তিরিত্যাকাঙ্ক্ষায়ামাহ কার্য্যং ইত্যাদি। কার্য্যং জন্যভূতে প্রকাশাখ্যগুণে অবয়বানাং দীপাবয়বানাং গুণঃ প্রকাশাখ্যঃ কারণং; তথাহি তত্র দীপাবয়বানাং তৈজসতয়া তেষাং প্রকাশাখ্যগুণসত্ত্বাৎ অবয়বানাং দীপানামপি প্রকাশাখ্যকার্য্যমুপপদ্যতে। নিত্যবস্তুনি

---

৭ অনু। অনাদিভাবাপন্ন ভোক্তার বিনাশে হেতু সম্ভব না হওয়ায় উহার নাশ নাই, কাজেই ভোক্তা নিত্য বলিয়া সিদ্ধ হয়।

৮ অনু। আত্মা যখন নিত্য, তখন আর উহার জন্যপ্রকাশ সম্ভব নহে। অপ্রকাশ বস্তুতে কখনও প্রকাশোৎপত্তি হইতে পারে না। (কারণ তাহা হইলে স্বরূপচ্যুতির প্রসঙ্গ হয়)

প্রকাশাশ্রয়সংযোগাৎ প্রকাশভ্রম ইন্ধনে।
আদর্শে চাবৃতিভঙ্গাৎ প্রকাশোৎপত্তিবিভ্রমঃ॥ ১০
তস্মান্নিত্যাত্মনো জ্ঞানং নিত্যং বাচ্যং তথা সতি।
লাঘবাজ্জ্ঞানমেবাত্মা নিরাধারঃ প্রকল্প্যতে॥ ১১

---

আত্মনি নিত্যস্বরূপে ন তথাত্বেন অনিত্যঃ প্রকাশঃ সম্ভবতি ; তস্য কারণাভাবাৎ উক্তরূপেণ কারণগুণপ্রক্রমেণ কার্য্যগুণাসম্ভবস্য অসম্ভবাৎ।

(১০) নতু দৃশ্যতে ইন্ধনাবয়বানাং প্রকাশাভাবেঽপি বহ্নিসংযোগদশায়াং প্রকাশোৎপত্তিঃ, তৎ কথময়ং নিয়মো ঘটত ইতি আকাঙ্ক্ষায়ামাহ—প্রকাশাশ্রয়েত্যাদি। প্রকাশাশ্রয়স্য বহ্নেঃ সংযোগাৎ তাদৃশোপাধিসত্ত্বাদিত্যর্থঃ। ইন্ধনে জ্বলৎকাষ্ঠে প্রকাশভ্রমঃ প্রকাশস্য আরোপঃ। তথাহি ইন্ধনস্য প্রকাশো ন স্বকীয় এব, পরং বহ্নিসংযোগরূপোপাধিকৃত ঔপচারিক এব। তেন নিরুক্তনিয়মস্য নানুপপত্তিরিতি ভাবঃ। দর্পণাদাবপি ন প্রকাশস্য উৎপত্তিরিত্যাহ আদর্শ ইত্যাদিনা। আদর্শে দর্পণাদৌ আবৃতেঃ আবরণস্য মলাদেঃ ভঙ্গাৎ অপসারাৎ প্রকাশোৎপত্তিবিভ্রমঃ ভ্রান্তিরূপং প্রকাশোৎপত্তিবিজ্ঞানম্, ন তু প্রমারূপম্। তথাহি দর্পণে য এব বর্ত্তমানঃ প্রকাশঃ মলেন তিরোহিতো ভবতি, স এব যদা অপসরতি, তদা প্রকাশস্য উৎপত্তিঃ ভ্রান্তিবিষয়ো ভবতি।

---

৯ অনু। জন্যপ্রদীপাদিপ্রকাশের প্রতি অবয়বের প্রকাশগুণ কারণ। অতএব নিত্যবস্তুতে অনিত্যপ্রকাশ সম্ভব হইতে পারে না। ( কারণ নিত্যবস্তুর অবয়ব নাই অতএব তদীয় প্রকাশও নাই )

১০ অনু ( ইন্ধন ও দর্পণে প্রকাশাখ্য গুণ না থাকিলেও কিরূপে প্রকাশ গুণ উৎপন্ন হয় তাহারই সমাধান করিতেছেন ) প্রকাশাশ্রয় অগ্নির সংযোগবশতঃ ইন্ধনে প্রকাশের ভ্রম হয়, বাস্তবিক উহাতে প্রকাশ উৎপন্ন হয় না। আদর্শ বা দর্পণে আবরণের ভঙ্গহেতু প্রকাশোৎপত্তির ভ্রম হয়।

अनाश्रिततया द्रव्यं संयोगादेश्च तन्मतम् ।
अतो ज्ञानेऽहमित्यादिबुद्धिरप्युपपद्यते ॥ १२

पिण्डेऽहन्धीर्हि मूढानां ध्रुवैवानादिदोषतः ।
संयोगात् तत्र पिण्डे तु ज्ञानवत्त्वमतिः प्रमा ॥ १३

---

(११) आत्मनो ज्ञानस्य नित्यत्वमुपपादयति तस्मादित्यादिना । तस्मात् स्वतः प्रकाशयुक्तस्य जन्यप्रकाशस्य अनियमादित्यर्थः । नित्यात्मनः नित्यस्य आत्मपदार्थस्य ज्ञानं प्रकाशः नित्यं वाच्यम् । आधारस्य आत्मनः नित्यस्वरूपस्य आधेयभूतनित्यज्ञान-कल्पनायां गौरवमाशङ्क्याह तथा सतीत्यादि । अथवा आत्मनि नित्यभूते जन्यप्रकाश-स्वीकारे तत्र जन्यप्रकाशे आत्ममनःसंयोगादीनां हेतुत्वं कल्पनीयमिति गौरवं, तदपेक्षया नित्यज्ञानस्य निराधारस्य आत्मस्वरूपस्य कल्पन एव लाघवमिति भावः ।

(१२) नित्यज्ञानस्य गुणरूपत्वं कर्म्मरूपत्वञ्च प्रतिषेधति अनाश्रिततयेत्यादिना । अनाश्रिततया असमवेतत्वेन संयोगादेश्च संयोगादिरूपात् गुणाच्च तत् द्रव्यं मतम् । तथाहि यदि आत्मज्ञानमिदं गुणरूपं कर्म्मरूपं वा स्यात्, समवेतं निर्गुणञ्च स्यात्, इदञ्च समवेतं संयोगादिगुणवच्चेति तस्य द्रव्यत्वं सिद्धमेवेति भावः । ज्ञान इत्यादि— कर्त्तृविहिततिङन्तवाच्यकर्त्तृप्रतिबिम्बावच्छिन्नेन ज्ञानेन अहम्पदार्थस्य कर्त्तुः आत्म-स्वरूपस्य तादात्म्यमवगम्यते । यदि ज्ञानेन आत्मनो भेदः स्यात्, तदा प्रतीतिरियं नोपपद्यत इति भावः । अत एवोक्तम् अत इत्यादि ।

(१३) ननु "अहं स्थूलः अहं गौरः" । इत्यादिप्रतीत्या देहस्यैव विषयीकरणात् कथं ज्ञानात्मनोरभेदः शक्यवचन इत्याकाङ्क्षायामाह पिण्ड इत्यादि । मूढानां अज्ञानां

---

১১ অনু। অতএব নিত্য আত্মার জ্ঞান নিত্যই বলিতে হইবে। এই-রূপ হইলে, (জ্ঞান ও জ্ঞানের আশ্রয় এই দ্বিবিধ বস্তুর কল্পনা না করিয়া) লাঘববশত নিরাধারজ্ঞানই আত্মা—এইরূপ কল্পনা করা যাইতেছে।

১২ অনু। আত্মা জ্ঞানস্বরূপ হইলেও অনাশ্রিতত্ব ও সংযোগাদি গুণহেতু উহা দ্রব্যস্বরূপ জানিবে। অতএব 'আমি জ্ঞানাশ্রয়' এইরূপ বুদ্ধিও উৎপন্ন হয়।

सन्तु वाधेयताल्पत्वजन्मनाशादिबुद्धयः ।
श्रोत्रस्य नभसोवार्थज्ञानस्य ज्ञानमात्रके ॥ १४

तस्माल्लाघवतर्केण बाधकाभावतस्तथा ।
श्रुत्यादिभिश्च नित्यात्मा चिद्रूपेणैव सिध्यति ॥ १५

---

जीवानाम् पिण्डे देहेन्द्रियादिसङ्घाते अनादिदोषतः संस्कारकारणीभूतमिथ्याज्ञान-वासनारूपानादिदोषादित्यर्थः। अहंधीः अहन्त्वभ्रमः। नन्वेवं कथं तत्र ज्ञानवत्त्व-प्रतीतिः प्रमा स्यादित्याशङ्कायामाह संयोगादित्यादि। तत्र पिण्डे देहे संयोगात् देहात्मनोः संयोगात् जन्यज्ञानवत्त्वप्रतीतेः प्रमात्वमिति भावः।

(१४) नित्यविभुरूपस्यापि ज्ञानस्वरूपस्य आत्मनः आधेयत्वादिबुद्धिमुपपादयति सन्त्वित्यादिना। तथाहि यथा नभसः नित्यत्वे विभुत्वे च सत्यपि कर्णशष्कुल्यवच्छिन्नस्य तस्य श्रोत्रतादशायां देहवृत्तित्वं क्षुद्रत्वम् उत्पत्तिः विनाशश्चेत्येतत्प्रतीतिरौपाधिकी सम्पद्यते, तथा आत्मनो ज्ञानरूपस्यापि घटाद्युपाधिवशात् आधेयत्वादिकमुपपन्नमिति भावः।

(१५) आत्मनः चित्स्वरूपत्वमुपपादयति तस्माल्लाघवेत्यादिना। लाघवेन पूर्व्वोक्तलाघवानुगततर्केण इत्यर्थः। बाधकाभावतः आत्मनो ज्ञानरूपत्वाभावसाधक-प्रमाणविरहादित्यर्थः। श्रुत्यादिभिः श्रुतिस्मृतिप्रमाणैश्च तत्र 'सत्यं ज्ञानमनन्तं ब्रह्म'

---

১৩ অনু। অনাদি মিথ্যাজ্ঞানরূপদোষহেতু ভ্রান্ত জীব শরীরে 'অহংবুদ্ধি' করিয়া থাকে। দেহ ও আত্মার সংযোগহেতুই দেহে জ্ঞানবত্ত্ব-প্রতীতি প্রমা হইয়া থাকে।

১৪ অনু। আকাশ ব্যাপক হইলেও যেমন কর্ণশষ্কুলী বা কর্ণপটহকে অবচ্ছেদকরূপে ধরিয়া শ্রোত্রের অল্পতা প্রভৃতি সঙ্গত হয়, সেইরূপ জ্ঞানমাত্র নিত্যব্যাপক হইলেও বিষয়কে অবচ্ছেদকরূপে গ্রহণ করিয়া অর্থজ্ঞানের আধেয়তা, অল্পতা ও উৎপত্তিনাশাদি বুদ্ধি হইতে পারে।

तज्ज्ञानं विभु नित्यत्वाद् देहव्यापितयापि च।
मध्यत्वे नाशिता हि स्यादणुत्वे वाल्पदेशता॥ १६

इत्यादिश्रुतयः। 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्'। इत्याद्याः स्मृतयश्च। ताभिः स्पष्टतया एव आत्मनो ज्ञानस्वरूपत्वस्य उक्तत्वात् न तत्सिद्धौ प्रत्यूह इति भावः।

(१६) आत्मस्वरूपस्य ज्ञानस्य नित्यत्वेन देहव्यापित्वेन च विभुत्वमुपपादयति तज्ज्ञानमित्यादिना। नित्यत्वादिति—नन्वयं हेतुः परमाणौ व्यभिचारी वैशेषिकादीनां परमाणोरपि नित्यत्वात्, तत्र च विभुत्वरूपसाध्यविरहादित्याशङ्क्याह देहव्यापितयेत्यादि। तथाहि देहव्यापितया नित्यत्वादिति निष्कृष्टो हेतुः। तदर्थश्च देहव्यापिताविशिष्टनित्यत्वादित्यर्थः। ननु निरुक्तहेतोः मध्यमपरिमाणत्वेऽपि उपपत्तेः कथं विभुत्वसाधकत्वमित्याकाङ्क्षायामाह मध्यत्वं इत्यादि। तथाहि यत् यत् मध्यमपरिमाणं तत् तत् विनाशि इति नियमे बाधकाभावात् तस्य मध्यमपरिमाणत्वे विनाशापत्त्या तस्य स्वीकर्तुमशक्यत्वादिति भावः। ननु मास्तु निरुक्तदोषात् मध्यमपरिमाणत्वं अणुपरिमाणत्वे को दोष इत्याकाङ्क्षायामाह अणुत्व इत्यादि। तथाहि यदि आत्मा अणुः स्यात् तदा अल्पदेशता स्यात्। एवञ्च 'शिरसि मे वेदना पादे मे सुख'मित्यादिप्रतीतिरनुपपन्ना स्यात्, तादृशप्रतीत्या शरीरव्यापित्वस्यैव आत्मनः सिद्धेरिति।

১৫ অনু। অতএব লাঘবরূপ তর্ক ও বাধকাভাবহেতু এবং শ্রুতি স্মৃতি প্রভৃতি দ্বারা নিত্য আত্মা চিদ্রূপেই সিদ্ধ হয়।

১৬ অনু। আত্মস্বরূপ জ্ঞান নিত্য এবং দেহব্যাপী বলিয়া বিভুই স্বীকার করিতে হয়। কারণ যদি উহাকে মধ্যমপরিমাণ স্বীকার করা যায়, তবে উহার বিনাশ অবশ্যম্ভাবী। অণুপরিমাণ স্বীকার করিলে অল্পমাত্র দেশ ব্যাপিয়া থাকিতে পারে।

विभुत्वेऽपि स्वधीवृत्तेरेव साक्षान्निरीक्षणात् ।
न सर्वत्र सदा सर्वभानं ज्ञाने प्रसज्यते ॥ १७
अर्थभानं चितावर्थप्रतिबिम्बो मतो बुधैः ।
वृत्तेरेव चितौ साक्षात् प्रतिबिम्बनयोग्यता ॥ १८

---

(१७) नन्वेवं आत्मनः विभुत्वे तस्य प्रकाशस्वरूपतायाश्च सिद्धेः कथं न सर्व्वदा सर्व्वस्य सर्व्ववस्तुज्ञानमित्याशङ्कामपसारयति विभुत्वेऽपीत्यादिना । स्वधीवृत्तेरेव स्वीया या बुद्धिः तस्या वृत्तेरेव निरीक्षणात् प्रकाशनात् । साक्षादिति वस्त्वन्तरमद्वारीकृत्ये-त्यर्थः । तथाहि आत्मनो विभुत्वे प्रकाशरूपत्वेऽपि एकैकस्याः स्वीयबुद्धिवृत्तेरेव साक्षात् निरीक्षणेन तद्‌वृत्तिविषयस्यैव वस्तुनो भानेन न सर्व्वदा सर्व्ववस्तुभानापत्तिरिति भावः ।

(१८) ननु कीदृशमिदमर्थभानं यस्य तादृशापत्तिः स्वरूपत इत्याकाङ्क्षायामाह अर्थभानमित्यादि । चितौ चित्स्वरूपे आत्मनि अर्थस्य प्रतिबिम्बः अर्थभानं अर्थस्य ज्ञानं मतः । तथाहि चित्स्वरूपेण आत्मना प्रकाशितां वृत्तिं द्वारीकृत्य आत्मनि अर्थस्य प्रतिबिम्ब एव अर्थज्ञानरूपं फलमिति प्राचीनानां मतम् इति भावः । अर्थस्य प्रतिबिम्बः पुरुषे वृत्तिद्वारैणैव, न तु साक्षादित्याह वृत्तेरेवेत्यादिना । तथाहि चितौ चित्स्वरूपे आत्मनि साक्षात् प्रतिबिम्बनयोग्यता अन्यमद्वारीकृत्य प्रतिबिम्बनसामर्थ्यं वृत्तेरेव, न तु अर्थादेरन्यस्यास्तीति ।—वृत्तिं द्वारीकृत्यैव अर्थस्य प्रतिबिम्बपातः पुरुषे भवतीति भावः ।

---

১৭ অনু। আত্মা বিভু হইলেও স্বীয় বুদ্ধিবৃত্তিকেই মাত্র প্রকাশ করায় জ্ঞানে সর্ব্বত্র সর্ব্বদা সকল বস্তু ভানের প্রসঙ্গ হইবে না।

১৮ অনু। প্রকাশস্বরূপ আত্মাতে বিষয়ের প্রতিবিম্বপাতকেই অর্থ-ভান বলা হইয়া থাকে। আত্মাতে সাক্ষাৎ প্রতিবিম্বপাত বৃত্তিরই সম্ভবপর। ( বিষয়ের প্রতিবিম্ব বৃত্তি দ্বারা )।

अतोऽसङ्गेऽपि कूटस्थचैतन्ये विभुनि ध्रुवे।
वृत्तिद्वारकमेवान्यभानं फलबलान्मतम्॥ १९

अन्वयव्यतिरेकाभ्यां वृत्तिजन्यतयाखिलः।
वृत्त्यैकाधिकरण्येन कामादिर्धीषु नाऽऽत्मसु॥ २०

अतोऽन्तःस्थविकाराणां स्वस्वबुद्धिष्ववस्थितेः।
कूटस्थ एव सर्वोऽपि चिदाकाशगणः समः॥ २१

---

(१९) तदेव स्पष्टतया प्रतिपादयति अत इत्यादिना। अतः वृत्तेरेव चितौ आचात् प्रतिबिम्बनसामर्थ्यादित्यर्थः।

फलबलात् कदाचिदेव कुत्रचन फलस्य दर्शनेन तद्बलादित्यर्थः। अन्यस्य अर्थस्य भानं वृत्तिद्वारकमेव, न तु तदद्वारकमपि, तथात्वे सर्वदैव सकलस्य सर्ववस्तुभानप्रसङ्गस्य दुर्निवारत्वादिति।

(२०) ननु आत्मनः कूटस्थत्वं कथं, नैयायिकवैशेषिकादिभिः कामादीनामात्मधर्मत्वस्य स्थापनादित्याशङ्कां प्रतिषेधति अन्वयव्यतिरेकाभ्यामित्यादिना। अन्वयः तत्सत्त्वनियतसत्ताकत्वम्, व्यतिरेकश्च स्वव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वम्। ताभ्यां हेतुभ्यां। वृत्तिजन्यतया वृत्तिजन्यत्वेन हेतुना। वृत्त्यैकाधिकरण्येन वृत्तिसामानाधिकरण्येन इत्यर्थः। तथाहि कार्य्यकारणयोरैकाधिकरण्यनियमेन कारणभूतया वृत्त्या सह कार्य्याणां कामादीनामैकाधिकरण्यस्य आवश्यकत्वात् धीषु बुद्धिषु एव कामादिः, न तु आत्मसु; वृत्तेरात्मधर्म्मत्वाभावादिति।

---

১৯ অনু। অতএব কূটস্থচৈতন্যস্বরূপ নিত্য বিভু আত্মা অসঙ্গ হইলেও ফলবলে বৃত্তিদ্বারাই অন্যবস্তুর ভান স্বীকৃত হইয়া থাকে।

২০ অনু। অন্বয় ও ব্যতিরেক বশতঃ কামাদি সকল পদার্থ বৃত্তিজন্য বলিয়া বৃত্তির সহিত ঐকাধিকরণ্য আবশ্যক হওয়ায় উহা বুদ্ধিতত্ত্বেরই ধর্ম্ম, আত্মার ধর্ম্ম নহে।

नित्यशुद्धो नित्यबुद्धो नित्यमुक्तो निरञ्जनः।
स्वप्रकाशो निराधारः प्रदीपः सर्व्ववस्तुषु ॥ २२
नन्वेवमेकतैवास्तु लाघवादात्मनां स्ववत्।
धीष्वेव सुखदुःखादिवैधर्म्यादिति चेन्न तत् २३

---

(२१) आत्मनः कूटस्थत्वमुपपादयितुमाह अत इत्यादि। अत इति कामादीनां बुद्धितत्त्वधर्म्मत्वादित्यर्थः। अन्तःस्थ-विकाराणाम् अन्तःकरणस्थितबुद्धिपरिणामभूतानां कामादीनामित्यर्थः। स्वस्वबुद्धिव्यवस्थितेः स्वीयबुद्धितत्त्वमात्रनिश्चन्वितत्वादित्यर्थः। चिदाकाशगणः आकाशवत् व्यापकस्वरूपश्चित्पदार्थ आत्मा समः। सर्व्वदा एकरूपः कामादिरूपविकाराभाववानित्यर्थः। अत एव कूटस्थः कूटस्थपदप्रतिपाद्य इत्यर्थः।

(२२) श्रुतिसिद्धमात्मनः स्वरूपान्तरं प्रदर्शयति नित्यशुद्ध इत्यादिना। नित्यशुद्धः पूर्व्वोक्तकूटस्थत्वेन निर्गुणः असङ्ग इति यावत्। नित्यबुद्धः नित्यज्ञानस्वरूपः। नित्यमुक्तः सर्व्वदा एव बन्धरहितः, तस्य बन्धराहित्यं मुक्तिदशायां प्रकृतेरिव न कादाचित्कमिति ततो वैलक्षण्यम्। निरञ्जनः अविद्यादिमलरहितः, प्रकृतिस्तु न तथा। स्वप्रकाशः अपराप्रकाश्यः, न तु बुद्ध्यादयस्तथा। निराधारः अनाधेयरूपः विभुस्वरूपस्य तस्य क्वाप्यवृत्तित्वात्। सर्व्ववस्तुषु प्रदीपः सर्व्वजड़प्रकाशकः। प्रदीपो यथा सर्व्वाणि वस्तूनि स्वसन्निहितानि प्रकाशयति तद्वदिति भावः। तदेवं नित्यशुद्धत्वादयो धर्म्माः पुरुषस्य स्वरूपभूता इति ध्येयम्।

(२३) अथ अद्वैतवादिवेदान्तमतसिद्धमात्मन एकत्वं निषेधति नन्वेवमित्यादिना।

---

২১ অনু। অতএব অন্তঃকরণপরিণামরূপ কামসঙ্কল্পাদি স্বীয় স্বীয় বুদ্ধিতত্ত্বেই অবস্থিত বলিয়া আকাশতুল্য সকল আত্মাই তুল্যরূপে কূটস্থ জানিবে।

২২ অনু। সেই আত্মা নিত্যশুদ্ধ নিত্যমুক্ত নিরঞ্জন স্বপ্রকাশ আধারশূন্য এবং সকল বস্তুরই প্রকাশক।

**भोगाभोगादिवैधर्म्येणैकरूपेऽपि चिद्गणे ।**
**श्रुतिस्मृतिभ्यामुक्तेन भेदसिद्धिः परस्परम् ॥ २४**

---

एवमिति प्रस्थानान्तरेषु आत्मभेदकतया अभिमतानां सुखदुःखादिविचित्रधर्माणां बुद्धिवृत्तित्वे सतीत्यर्थः। खवत् आकाशवत् लाघवात् आत्मनाम् एकत्वैव अस्तु न तु बहुत्वम्। तथाहि यथा—घटपटादिरूपाणाम् उपाधीनां भेदेऽपि आकाशस्य लाघवात् एकत्वमेव, न तु नानात्वं, तथा बुद्धितत्त्ववृत्तिसुखदुःखादीनां वैचित्र्येऽपि आत्मनो न नानात्वं, किन्तु एकत्वमेव अस्तु इति पूर्वपक्षिणामभिप्रायः। सुखदुःखादिरूपवैधर्म्यादिति सुखदुःखादिरूपविरुद्धधर्माध्यासादित्यर्थः। तथाहि दृश्यते—केचित् सुखिनः केचित् दुःखिन इत्यादि, तथात्वञ्च आत्मभेदमन्तरेणापि सुखदुःखाद्याधारतया कल्पितानां बुद्धीनां भेदेनैव सोपपत्तिकमिति भावः। चेन्न तदिति सिद्धान्तिनः पूर्वपक्षनिषेधः। तत्र निषेधे हेतुश्च परकारिकायां वर्णयिष्यते।

(२४) पूर्वकारिकोक्तात्मैकत्वप्रतिषेधे हेतुमुपन्यस्यति भोगाभोगादीत्यादिना। नित्यशुद्धत्वादिधर्मैः तुल्यरूपेऽपि चिद्गणे आत्मसमूहे श्रुतिस्मृतिभ्यां "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इति श्रुत्या 'आत्मानं द्विविधं प्राहुः परापरविभेदत" इत्यादिस्मृत्या च उक्तेन प्रतिपादितेन भोगाभोगादिवैधर्म्येण भोगतदभावरूपविरुद्धधर्मेण इत्यर्थः। परस्परं भेदसिद्धेः आत्मनः न एकत्वमिति शेषः।

---

২৩ অনু। এখন প্রশ্ন হইতেছে এই যে, যদি উক্তরূপই আত্মার স্বরূপ স্থিরীকৃত হয়, তবে আকাশকে যেমন লাঘবতঃ এক স্বীকার করা হয়, সেইরূপ আত্মাকেও একমাত্র স্বীকার করিতে আপত্তি কি? অমুকে সুখী অমুকে দুঃখী ইত্যাদিরূপে সুখ দুঃখ প্রভৃতি ধর্ম্মদ্বারা বৈচিত্র্য হইতে পারিত, কিন্তু তাহাও বুদ্ধিতত্ত্বেই স্বীকার করা হইয়াছে।

২৪ অনু। তাহার উত্তর এই যে, না, আত্মা একরূপ হইলেও একমাত্র নহে, কারণ তাহা হইলে এক আত্মাতে একদা ভোগ ও অভোগরূপ

सुखादिप्रतिबिम्बात्मा भोगोऽप्यस्य न वस्तुतः।
तथाऽप्यस्य चितौ भावाभावौ स्यातां हि भेदकौ॥
औपाधिकौ यथा श्यामरागौ स्फटिकभेदकौ।
स्वदृष्टान्तश्च विषमो वैधर्म्यासिद्धितोऽम्बरे॥ २५-२६

इति श्रीविज्ञानभिक्षुविरचिते सांख्यसारे उत्तरभागे
पुरुषस्वरूपनिरूपकः प्रथमपरिच्छेदः॥१॥

—o—

(२५-२६) ननु भोगः सुखदुःखसाक्षात्कारः, तस्य च बौद्धवृत्तित्वेन पूर्वं समाहितत्वात् कथङ्कारमात्मवृत्तित्वकल्पनया आत्मभेदः सूपपन्नः स्यादित्याशङ्क्याह—सुखादीत्यादि। सुखादिप्रतिबिम्बात्मा बुद्धिवृत्तिसुखादिप्रतिबिम्बस्वरूपः भोगः यद्यपि अस्य आत्मनः न वस्तुतः। तथाहि स्वमते भोगो नाम न सुखदुःखसाक्षात्कारः, परं बुद्धिवृत्तिसुख-दुःखयोः आत्मनि स्वच्छरूपे प्रतिबिम्बलक्षणः, तस्यापि आत्मनिर्मलत्वोपाधिकभ्रमविषय-तया न तदधीनस्यात्मभेदस्य अनुपपत्तिलेशोऽपि इति भावः। तथापि भोगस्य प्रतिबिम्ब-रूपत्वेन अवास्तविकत्वेऽपि अस्य भ्रान्तस्य भोगस्य भावाभावौ सत्त्वासत्त्वे भेदकौ आत्म-भेदसाधकौ स्यातामिति। इदमत्रावधेयम्, यथा—निर्मले क्वचित् दर्पणे पतितप्रतिबिम्बे दृश्यमानः प्रतिबिम्बः अपतितप्रतिबिम्बस्य दर्पणान्तरस्य स्वाश्रये भेदं साधयति तथैव भोगिनि आत्मनि प्रतीयमानः प्रतिबिम्बरूपो भोगः अभोक्तुरात्मनः स्वाश्रये भेदमुपपादयतीति।

বৈধর্ম্য সম্ভবপর হইতে পারে না। অথচ এক আত্মা যে কালে মুক্ত অপর আত্মা তৎকালে সংসারভোগী ইহা শাস্ত্রসিদ্ধ, অতএব উক্ত ভোগ ও ভোগাভাবরূপ বৈধর্ম্যহেতুই আত্মার অনেকত্ব মানিতে হইবে। শ্রুতি ও স্মৃতিতেও আত্মার পরস্পর ভেদ সিদ্ধ আছে বলিয়া আত্মা এক নহে।

২৫-২৬ অনু। সুখাদিপ্রতিবিম্বরূপ ভোগও আত্মার বাস্তবিক নহে; কিন্তু ঔপচারিক। তথাপি যেমন স্ফটিকের ঔপাধিক শ্যামবর্ণ ও রক্তবর্ণ উক্ত বর্ণদ্বয়বিশিষ্ট স্ফটিকদ্বয়কে পরস্পর ভিন্ন বলিয়া বুঝাইয়া দেয়,

# अथ द्वितीयः परिच्छेदः

अथात्मानात्मवैधर्म्यं गुणदोषात्मकं तयोः ।
वक्ष्ये विस्तरतो येन विवेकोऽतिस्फुटो भवेत् ॥ १

---

तत्रैव दृष्टान्तमुपन्यस्यति औपाधिकाविति। औपाधिकौ सन्निहितश्यामरक्तचस्तूपाधिकौ इत्यर्थः। श्यामरागौ स्फटिकवृत्तिश्यामरक्तप्रतिविम्बौ यथा स्फटिकयोः श्यामरक्तप्रतिविम्बयुक्तयोः भेदकौ भेदसाधकौ, तथा चितौ भावाभावौ भागतदभावलक्षणौ धर्म्मौ परस्परं भेदकौ स्यातामिति पूर्व्वकारिकोक्तवाक्यार्थेनान्वयः समाप्यः। अम्बरे आकाशे वैधर्म्म्यासिद्धितः विरुद्धधर्म्मलक्षणस्य वैधर्म्म्यस्य असिद्धितः खदृष्टान्तः पूर्वोक्तः खवदिति दृष्टान्तः विषमः विसदृशः। अतएव खदृष्टान्तेन न ब्रह्मात्मन एकत्वं साधयितुमिति भावः।

इति सांख्यसारस्य उत्तरभागे पुरुषस्वरूपनिरूपकप्रथमपरिच्छेदटीका समाप्ता।

---

(१) विवेकग्रहे परस्परं वैधर्म्म्यग्रहस्य उपयोगितया आत्मानात्मवैधर्म्म्यवचनं प्रतिजानीते अथेत्यादिना। आत्मेत्यादि—आत्मा चैतन्यस्वरूपः, अनात्मा जड़वर्गः,

---

সেইরূপ উক্ত প্রতিবিম্বের সত্তাসত্ত্বরূপ ভোগ ও অভোগই আত্মার ভেদক। আকাশে বৈধর্ম্ম্য অসিদ্ধ বলিয়া আকাশকে ভেদের স্থলে দৃষ্টান্তরূপে উপন্যাস করা সমীচীন নহে।

ইতি বিজ্ঞানভিক্ষুবির্‌চিত সাংখ্যসারের ( উত্তরভাগে ) পুরুষস্বরূপ পরিচ্ছেদনামক প্রথমপরিচ্ছেদের অনুবাদ সমাপ্ত।

— — —

सामान्यात्मघनाकाशे सान्निध्यैरितशक्तिभि: ।
जायते लीयते भूत्वा भूयोऽयं जगदम्बुद: ॥ २

त्रिगुणात्मकशक्तीनां परिणामैरतस्थितिः ।
आधारविधया विश्वोपादानमविकारत: ॥ ३

---

तयो: वैधर्म्ये परस्परं विरुद्धधर्म्मौ । गुणदोषात्मके गुणदोषलक्षणे । आत्मधर्म्मस्य उपादेयतया उत्कृष्टत्वेन गुणत्वम्, अनात्मधर्म्मस्य हेयतया अपकृष्टत्वेन दोषत्वमिति ध्येयम् । विवेक इति आत्मानात्मनो: भेद: परिस्फुट: अनायासवेद्य: इत्यर्थ: ।

(२) आविर्भावतिरोभावयो: पुरुषस्य सान्निध्येन उपयोगितामाह सामान्येत्या-दिना । अयं जगदम्बुद: जगद्रूपो मेघ: जगत: मेघत्वेनारोप: मेघवत् क्षणभङ्गुरत्वेन प्रतिपत्तव्य: । सान्निध्यैरितशक्तिभि: सान्निध्यप्रयुक्तसामर्थ्यैरित्यर्थ: । तथाहि जडस्य जगत: स्वत: क्रियाशक्तिविरहात चैतन्यस्वरूपस्य आत्मन: सान्निध्येनैव क्रियाशक्तिमत्त्व-मिति भाव: । प्रकृते मेघाकाशसाम्यप्रदर्शनस्य अयमभिप्रायो यथा,—आकाशे मेघस्य उत्पत्तावपि यथा मेघेन आकाशो न लिप्यते, नापि रूपान्तरमापद्यते, तथैव आत्मनि विभुरूपे उत्पद्यमानेनापि जगता नात्मा लिप्यते, नापि विकृतिमापद्यते अथ च आत्मन: सान्निध्यमन्तरेण जगतो जड़रूपस्य न क्रियासामर्थ्यमिति आत्मा तत्रोपयुज्यत इति भाव: ।

---

১ অনু। অনন্তর গুণ ও দোষাত্মক অর্থাৎ গুণস্বরূপ বলিয়া উপাদেয় আত্মার ধর্ম্ম ও দোষাত্মক বলিয়া পরিহেয় অনাত্মার ধর্ম্ম বিস্তৃতরূপে প্রতিপাদন করিব। যাহা দ্বারা আত্মা ও অনাত্মার ভেদ অতি পরিস্ফুট-ভাবে প্রতীত হইতে পারে।

২ অনু। সামান্য আত্মরূপ ঘনাকাশে আত্মার সান্নিধ্যরূপ শক্তি-বশতঃ জগদ্রূপ মেঘ নিরন্তর আবির্ভাব ও আবির্ভাবের পর তিরোভাব প্রাপ্ত হইতেছে।

यथाधारतया तोयं धरोपादानमिष्यते ।
स्वस्थपार्थिवतन्मात्रद्वारेणैवं चितिर्मता ॥ ४
अतो जगदुपादानमपि ब्रह्माऽविकारतः ।
कूटस्थनित्यपर्य्याय-परमार्थसदुच्यते ॥ ५

---

(३) आत्मनः विश्वोपादानत्वमधिष्ठानतया उपपादयति त्रिगुणेत्यादिना । त्रिगुणात्मकशक्तीनां सत्त्वरजस्तमःस्वरूपताभेदेन व्यवह्रियमाणस्य प्रधानस्य इत्यर्थः । यद्यपि त्रिगुणात्मिका एकैव प्रकृतिः, तथापि एकैकगुणप्राधान्येन समयविशेषे एकस्या अपि प्रकृतेर्भेदेन व्यवहारो न दुष्यत इति भावः । अविकारत इति विकाराभावात् । अधिष्ठानविधया अधिष्ठानरूपेण । न तु उपादानकारणतया मुख्यया इति शेषः । विश्वोपादानं जगतः सर्व्वस्य उपादानकारणमिति भावः ।

(४) निरुक्तमर्थं दृष्टान्तमाह यथेत्यादिना । यथा—स्वस्थपार्थिवतन्मात्रद्वारेण स्वनिष्ठपार्थिवतन्मात्रद्वारेण इत्यर्थः । आधारतया अधिष्ठानविधया तोयं जलं धरायाः पृथिव्या उपादानं तथा एव जगतः आश्रयदानद्वारेण चितिः विश्वोपादानमिष्यत इति भावः ।

(५) एवं जगदुपादानत्वेऽपि आत्मनः कूटस्थत्वादिकमुपपादयति अत इत्यादिना । अतः आत्मनि विश्वोपादानत्वस्य निरुक्तरूपत्वादित्यर्थः । जगदुपादानमपि जगतः उपादानकारणमपि ब्रह्म आत्मा अविकारतः विकाररहितत्वेन इत्यर्थः । निरुक्तोपादान-कारणतायाः अधिष्ठानतामात्रत्वादिति भावः । कूटस्थनित्यपरनामधेयमित्यर्थः ।

---

৩ অনু। এইজন্য ত্রিগুণাত্মক শক্তির পরিণামহেতু চিন্ময় আত্মা আধাররূপে ও অবিকাররূপে বিশ্বের উপাদান বলিয়া কথিত।

৪ অনু। যেমন ধরার আধার বলিয়া তোয়কে ধরার উপাদান বলিয়া স্বীকার করা হয়, চিতি ঐরূপ স্বস্থপার্থিবতন্মাত্র দ্বারা জগতের উপাদান কারণ।

স্বার্থত্বাৎ স্বানুভূত্যা চ সিদ্ধত্বাৎ পরমার্থসৎ।
স্বতঃ স্থিত্যা স্বতঃ সিদ্ধ্যা লোকৈঃ সন্নিতি গীয়তে ॥ ৬
প্রতিক্ষণবিকারিত্ব তৈস্তৈ রূপৈরপায়তঃ।
প্রকৃত্যাদিরসন্ সর্বো জড়ার্থোঽব্ধৌ তরঙ্গবৎ ॥ ৭

---

পারমার্থসৎ পারমার্থিকসত্ত্বযুক্তমুচ্যতে। তথাহি ব্রহ্মণঃ যৎ জগদুপাদানত্বং তৎ ন মুখ্যং, পরমধিষ্ঠানতালক্ষণমাত্রম্ অতস্তস্য কূটস্থত্বাদিকং ন ব্যাহন্যত ইতি ভাবঃ।

(৬) অথ আত্মনঃ পরমার্থসত্ত্বমুপপাদয়তি স্বার্থত্বাদিত্যাদিনা। স্বার্থত্বাৎ স্বার্থমাত্রাপেক্ষত্বাৎ অপরার্থত্বাদিতি যাবৎ। স্বানুভূত্যা স্বলক্ষণজ্ঞানেন সিদ্ধত্বাৎ স্বপ্রকাশত্বাদিত্যর্থঃ। পরমার্থসৎ পরমার্থতঃ সৎ ব্রহ্মেতি শেষঃ। স্বতঃ স্থিত্যা অধিকরণান্তরাপ্রবৃত্তিত্বেন স্বতঃ সিদ্ধ্যা স্বতঃপ্রকাশত্বেন চ লোকৈঃ শাস্ত্রজ্ঞৈঃ তত্ত্বজ্ঞৈর্বা সন্ পুরুষ ইতি শেষঃ। গীয়তে কথ্যতে। তথাহি বৈদান্তিকানামদ্বৈতিনামিব নেদ-আত্মনঃ পরমার্থসত্ত্বং ভ্রমাধিষ্ঠানত্বলক্ষণম্, পরন্তু নিরুক্তরূপমিতি ভাবঃ।

(৭) অথ আত্মনঃ তাদৃশং পরমার্থসত্ত্বমুপপাদ্য প্রকৃত্যাদীনাং পরিণামিত্বরূপম্ অসত্ত্বমুপপাদয়তি প্রতিক্ষণেত্যাদিনা। প্রতিক্ষণবিকারিত্ব সর্ব্বদা অন্যথাভাবলক্ষণ-

---

৫ অনু। অতএব আত্মা এইরূপে জগতের উপাদানকারণ বলিয়া কথিত হইলেও বিকাররাহিত্যহেতু কূটস্থ নিত্যার্থক পরমার্থ সৎশব্দে অভিহিত হইয়া থাকে।

৬ অনু। স্বার্থত্ব এবং স্বানুভূতি হেতু সিদ্ধ বলিয়া আত্মাকে পরমার্থসৎ বলা হয় এবং স্বতঃস্থিতি ও স্বতঃসিদ্ধিহেতু এই আত্মা সন্ বলিয়া কথিত হইয়া থাকে।

৭ অনু। (আত্মার পরমার্থসত্ত্ব উপপাদন করিয়া প্রকৃত্যাদির পরিণামিত্বরূপ অসত্ত্ব উপপাদন করিতেছেন।)—যেরূপ সমুদ্রে তরঙ্গসমূহ

यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै।
परिणामादिसम्भूतां तद्वस्त्वित्यादिकस्मृतेः॥ ८
परार्थाधीनसत्त्वाच्च परदृष्ट्या च सिद्धितः।
परतः सदसच्चैव तत्परापेक्षया मतः॥ ९

---

विकृत्या इत्यर्थः। 'सतत्त्वतोऽन्यथा प्रथा विकार इत्युदाहृत' इति विकारलक्षणात्। तैः तैः रूपैः विभिन्नप्रकारैः इत्यर्थः। अपायतः विनाशात् प्रकृत्यादिः जड़वर्गः असन्। तत्र दृष्टान्तः अब्धौ तरङ्गवदिति।

(८) आत्मन एव परमार्थसत्त्वं विष्णुपुराणवाक्येन प्रमाणयन् उक्तं प्रकृतेरसत्त्वं प्रतिपादयति--यत्तु इत्यादिना। 'तद्वस्तु नृप तच्च किम्' इति विष्णुपुराणादिस्मृतेः विष्णुपुराणादिस्मृतिवाक्यात्, यत् वस्तु कालान्तरेणापि कालविशेषेणापि परिणामादि-सम्भूतां परिणामादिप्रयुक्ताम् अन्यसंज्ञाम् अवस्थादिसंज्ञां न उपैति तदेव वस्तु-परमार्थसत्। अत एव प्रकृतेः तथात्वाभावात् न परमार्थसत्त्वं परम् असत्त्वमेवेति प्रागुक्तं समञ्जसमेवेति भावः।

(९) पुनरपि प्रधानादीनामसत्त्वमुपपादयति परार्थेत्यादिना। परार्थस्य आत्म-प्रयोजनभूतभोगापवर्गलक्षणस्य विषयस्य अधीनं यत् सत्त्वं तस्मात्। तथाहि प्रकृत्यादि-जड़वर्गस्य सत्त्वं परस्य आत्मनः प्रयोजननिष्पादनार्थं, न तु आत्मनोऽपि परार्थाधीनं सत्त्वमिति भावः। किञ्च परदृष्ट्या परकीयप्रकाशेन आत्मनः प्रकाशस्वरूपस्य प्रकाशेन

---

প্রতিক্ষণ বিকারপ্রাপ্ত হইয়া সেই সেই রূপ হইতে ভ্রষ্ট হয়, সেইরূপ প্রকৃত্যাদি সকল জড়বর্গই প্রতিক্ষণ বিকারহেতু সেই সেই রূপ হইতে বিচ্যুত হওয়ায় 'অসৎ' বলিয়া কথিত হয়।

৮ অনু। যে বস্তু কালান্তরেও পরিণামাদিসম্ভূত অন্যসংজ্ঞা প্রাপ্ত হয় না, তাহাকেই বস্তু বলিয়া বিষ্ণুপুরাণাদি স্মৃতি প্রতিপাদন করিয়াছেন, অতএব প্রকৃত্যাদি পদার্থ বস্তু অর্থাৎ সৎ নহে, কিন্তু অসৎ।

सतोऽस्तित्वं तु नासत्ता नास्तित्वे सत्यता कुतः।
इति गारुड़तश्चैवं सदसत्त्वव्यवस्थितेः॥ १०

अतो न सत्ताऽसदिदं जगत् सदसदात्मकम्।
असद्विषयकत्वाच्च तस्य धीस्तात्त्विकी भ्रमः॥ ११

---

इत्यर्थः। स्थितिः प्रकाशश्चेतोः। तथाहि सर्व्वो हि प्रकृत्यादिर्जड़वर्गः आत्म-प्रकाशेन प्रकाश्यते यतः तस्मादित्यर्थः। तत्परापेक्षया तेषां प्रधानादीनां या परापेक्षा तया, न तु तदिति भिन्नं पदम् अजहल्लिङ्गभिन्नस्थले उद्देश्यविधेययोरेकलिङ्गकत्व-नियमेन मत इत्यादि-प्रनिर्द्देशस्य अन्याय्यतापातात्। परतः सन् स्वतःसिद्धसत्ता-शून्यः प्रकृत्यादिः असन्नेव मतः न तु कदाचित् सन्नपीति भावः; एतेन प्रकृत्यादेः परमार्थसत्त्वशून्यत्वं व्यवतिष्ठत एवेति भावः।

(१०) प्रकृत्यादेरसत्त्वमुपपाद्य आत्मनः सत्त्वमपरिणामलक्षणमुपवर्णयति सत इत्यादिना। सतः सत्तास्वरूपस्य आत्मनः अस्तित्वम् अपरिणामित्वलक्षणं सत्त्वम् अस्तीति शेषः। असत्ता पूर्व्वनिरुक्तं परिणामलक्षणमसत्त्वमित्यर्थः नास्तीति शेषः। नास्तित्वे निरुक्तलक्षणासत्त्वे प्रकृत्यादिवत् आत्मन्यपि स्थिते सति सत्त्वता सत्त्वस्वरूपता कुतः स्यादिति शेषः। गारुड़तः गरुड़पुराणोक्तवचनत इत्यर्थः। सदसत्त्वयोः सत्त्वा-सत्त्वयोः पदार्थयोः व्यवस्थितेः व्यवस्थानात्। तथाहि गारुड़विष्णुपुराणादिप्रामाण्येन प्रकृत्यादौ निरुक्तलक्षणमसत्त्वम् आत्मनि च निरुक्तलक्षणं सत्त्वं समन्वेतीति भावः।

---

৯ অনু। যেহেতু প্রকৃতির সত্তা পরার্থাধীন এবং পরপ্রকাশহেতু উহা প্রকাশিত হয়, আর উহার সত্তাও পরাধীন, আত্মার আশ্রয়েই উহা অবস্থিত অতএব উহা অসৎ বলিয়া কীর্ত্তিত।

১০ অনু। যে বস্তু সৎ, তাহার অস্তিত্ব আছে, অসত্তা নহে। কারণ যদি উহা অসৎ হয়, তবে সত্য হইতে পারে না। এইরূপ গরুড়-পুরাণের বাক্য হইতে আত্মা সৎ ও প্রকৃত্যাদি অসৎ ইহা ব্যবস্থিত হইয়া থাকে।

जगद्वृक्षस्य चैतन्यं सारोऽसारस्तथेतरत् ।
प्रपञ्चस्य त्विरांशो हि चितिरेवाऽविकारतः ॥ १२

---

(११) अद्वैतिनो हि जगतः सदसद्भ्यामनिर्व्वचनीयत्वं वर्णयन्ति, तदस्मिन् मते कथमुपपद्यत इत्याकाङ्क्षायामाह अत इत्यादि । अत इति जगतः कूटस्थत्वादिरूपपारमार्थिकसत्त्वाभावात् अस्तित्वत्त्वेन सत्त्वाश्चेत्यर्थः । न सदिति निरुक्तरूपपारमार्थिकसत्त्वशदित्यर्थः । न असत् परं सदित्यर्थः परिणामिसत्तावदिति यावत्, एतेन जगत् सदसदात्मकम् । परिणामिसत्तावत् पारमार्थिकसत्ताविरहश्चेत्यर्थः । नन्वस्तु सदसद्भ्यामनिर्व्वचनीयतावादः समञ्जसं, जगतो भ्रमस्य का गतिरित्याकाङ्क्षायामाह असदित्यादि । असद्विषयकत्वात् पारमार्थिकसत्त्वशून्यपदार्थविषयकत्वात्, तस्य जगतः धीः बोधः तात्त्विको भ्रमः याथार्थ्येन भ्रान्तिज्ञानमेव । तथाहि—जगदिदं पारमार्थिकसत्त्वशून्यमित्युपपादितमेवाधस्तात्, तादृशपदार्थविषयकत्वम् एव ज्ञानस्य मिथ्यात्वं प्रकृते बोद्धव्यमिति जगद्विषयकज्ञानस्य वैदान्तिककथितं मिथ्यात्वं नासमञ्जसमिति भावः ।

(१२) प्रकृतत्वाद्यपेक्षया आत्मनः समुत्कर्षं निर्व्वक्ति जगद्वृक्षस्येत्यादिना । जगद्वृक्षस्य जगद्रूपस्य वृक्षस्य । जगतः मुमुक्षोश्छेद्यत्वेन वृक्षपदेन वृक्षप्रतिपादनेन अकृतारोपः । चैतन्यम् आत्मा सारः सारभागरूपम् । इतरत् चैतन्यभिन्नं सर्व्वमसारः तुच्छभाग एव । यथा नाम वृक्षेषु तदीयः सारभागः त्वगभ्यन्तरे आवृतः रक्ष्यते, तथैव जगत्प्रपञ्चेन आत्मनः आवरणात् चैतन्यस्य सारत्वं जगतश्च वृक्षत्वमित्यादि समा-

---

১১ অনু। অতএব জগতের পারমার্থিক সত্তা নাই এই হেতু ইহা অসৎ এবং পরিণামি সত্তা আছে এইজন্য সৎ বলিয়া খ্যাত হয়। উক্ত জগতের জ্ঞান অসদ্বিষয়ক বলিয়া উহার জ্ঞান যথার্থতঃ ভ্রম। (কাজেই বেদান্তিমতসিদ্ধ জগতের মিথ্যাত্ব এইরূপে সঙ্গত হইতে পারে)।

तदन्यदखिलं तुच्छमसारत्वादुदीर्यते।
तथाऽनृतमसच्चापि तदपेक्ष्यास्थिरत्वतः ॥१३

एवंविधैवाऽऽत्मसत्ता अन्यासत्ता च दर्शिता।
वाशिष्ठादौ विस्तरतो यथा लेशात् तदुच्यते ॥१४

---

मनन्ति। चैतन्यस्य सारत्वे स्वसम्मतामुपपत्तिं दर्शयति प्रपञ्चस्येत्यादिना। प्रपञ्चस्य अस्य जगतः अविकारतः परिणामलक्षणविकाराभावत्वात् हेतोः, चितिः चैतन्यमेव स्थिरांशः सारभागः। तथाहि यथा वृक्षस्य य एवान्तर्भागो जलातपादिभिरक्षीण-स्थिरमवतिष्ठते कीटादिभिश्च नाविरमुपद्रुतः स एवांशः स्थिरतया सारपदभाक्, तथैव यच्चैतन्याभिधं वस्तु परिणामविकारं नोपैति तदेव प्रकृते सारपदभागिति युक्त एव चैतन्ये सारत्वारोप इति भावः।

(१३) ननु अद्वैतिनिवृत्ते जगतस्तुच्छत्वे कोपपत्तिरित्याकाङ्क्षायामाह तदन्य-दित्यादि। तदन्यत् तस्मात् चैतन्यात् अपरम् अखिलं सर्व्वमेव असारत्वात् विकृतिमत्त्वात् तुच्छम् उदीर्य्यते तुच्छमिति कथ्यते। तथाहि तुच्छत्वमिदं नालीकत्वं परमन्याहृत्यमेव तदत एव अस्मिन् मतेऽपि तत्तुच्छत्वं नोपपद्यत इति नेति। तत् चैतन्यम् अपेक्ष्य अस्थि-रत्वतः अस्थिरत्वाद्धेतोः अनृतं अनृतत्ववत् असत् असत्त्वञ्च। तथाहि अनृतत्वमसत्त्व-ञ्चेदम् अद्वैतिनामिव न मिथ্যात्वादिरूपम् परमापेक्षिकास्थिरत्वलक्षणमेवेति भावः।

---

১২ অনু। জগদ্রূপ বৃক্ষের চৈতন্যই একমাত্র সার, অন্য সমস্ত বস্তুই অসারস্বরূপ। চৈতন্য অবিকৃত অবস্থায় থাকে বলিয়া উহাই প্রপঞ্চের স্থিরাংশ।

১৩ অনু। তদ্ভিন্ন সমস্ত পদার্থই অসারতাহেতু তুচ্ছ বলিয়া কথিত হয়। এবং আত্মা অপেক্ষা অস্থিরতাহেতু অনৃত ও অসৎ নামে কথিত হইয়া থাকে।

स्वप्नो जाग्रत्यसद्रूपः स्वप्ने जाग्रदसद्वपुः ।
स्मृतिर्जन्मन्यसद्रूपा स्मृतौ जन्माऽप्यसन्मयम् ॥ १५

जगन्मयी भ्रान्तिरिति न कदापि न विद्यते ।
विद्यते न कदाचिच्च जलबुद्बुदवत् स्थितम् ॥ १६

---

(१४) अथ वाशिष्ठादिसम्मतत्वमपि आत्मसत्ताया अन्यासत्तायाश्च दर्शयति एवंविधैवेत्यादिना। वाशिष्ठादौ योगवाशिष्ठरामायणादौ विस्तरतः यथा आत्मसत्ता अन्यासत्ता च एवंविधैव दर्शिता तत् लेशात् उच्यते। एतेन निरुक्तरूपात्मसत्त्व-तदितरासत्त्वयोर्न स्वकपोलकल्पितत्वं परं प्रमाणपुरुषप्रमाणितत्वमपीति भावो व्यज्यते।

(१५) वाशिष्ठवाक्यमेव निर्वक्ति स्वप्न इत्यादिना। जाग्रति जाग्रदवस्थायां स्वप्नः स्वाप्निको विषयः असद्रूपः। स्वप्ने स्वप्नावस्थायाञ्च जाग्रत् जाग्रत्पदार्थः असद्रूप इति शेषः। एवं जन्ममरणयोरपि परस्परकालासत्त्वमित्याह स्मृतिरित्यादिना।

(१६) जगतः सर्व्वस्य भ्रान्तिवादमुपपादयति जगन्मयीत्यादिना। कदाचन न विद्यते स्थिरतां प्रपद्यते, तथोहि नहि विद्यते जगति तथा किमपि वस्तु यत् चिरस्थिरतां भजते, अतएव जगन्मयी भ्रान्तिः जगति स्थिरताबुद्धिर्भ्रमरूपेत्यर्थः। ननु दृश्यते जगतः प्रत्यक्षत एव स्थिरतेति कथं तद्बुद्धिर्भ्रान्तिरिति चेत्तत्राह विद्यते तु इत्यादि। तथाहि यथा जलबुद्बुदाः केचित् सुचिरस्थिरा अपि दृश्यमाना न अविनाशितां लभन्ते तथैव जगदिदं चिरस्थिरं दृश्यमानमपि नैकान्ततः स्थिरं, परं काले लयगामि एवेति तत्र एकान्तस्थिरताबोधो भ्रमरूप एव इति भावः।

---

১৪ অনু। এইরূপে আত্মার সত্তা ও অন্যপদার্থের অসত্তা প্রদর্শিত হইল। যোগবাশিষ্ঠাদিগ্রন্থে বিস্তৃতরূপে যে আত্মার সত্তা ও অন্যপদার্থের অসত্তা প্রতিপাদিত হইয়াছে, তাহা আংশিকরূপে বর্ণনা করিতেছি।

১৫ অনু। জাগ্রৎ অবস্থায় স্বাপ্নিক বস্তু সৎ নহে। আবার স্বপ্নাবস্থায় জাগ্রতের বস্তু অসৎ। জন্মে মৃত্যু অসৎ ও মৃত্যুতে জন্ম অসৎস্বরূপ।

आत्मैवास्ति परं सत्यं नाऽन्याः संसारदृष्टयः।
शुक्तिकारजतं यद्वद् यथा मरुमरीचिका॥ १७
अस्ति सर्वगतं शान्तं परमात्मघनं शुचि।
अचिन्त्यचिन्मात्रवपुः परमाकाशमाततम्॥ १८
यत् सर्वगं सर्वशक्ति सर्वं सर्वात्मकं स्वयम्।
यत्र यत्र यथोदेति तथाऽस्ते तत्र तत्र वै॥ १९

---

(१७) ननु किमु सर्व्वमेव वस्तु दृश्यमित्याकाङ्क्षायामाह आत्मैवास्तीत्यादि। परं सत्यं परमार्थसत्यमित्यर्थः। अन्याः संसारदृष्टयः दृश्यमानः संसार इत्यर्थः। क्लदविह्नितो भाव इति न्यायात् न परमार्थसत्या इति शेषः। तत्रैव दृष्टान्तमाह—शुक्तिकेत्यादिना। तथाहि—यथा शुक्तिकायां दृश्यमानं रजतं न परमार्थसत्यं नापि मरुभूमौ दृश्यमाना मरीचिका परमार्थसत्या, तथैव जगति दृश्यमानं स्थिरत्वादिकं न परमार्थसत्यमिति भावः।

(१८) आत्मनः सर्व्वगतत्वादिकमाह अस्तीत्यादिना। सर्व्वगतं सर्व्वमूर्त्त-संयोगानुयोगि। शान्तं निर्म्मलम्। आकाशमिति आकाशमिवेत्यर्थः। आततं व्यापकम्।

(१९) सर्व्वगं सर्व्वगतमित्यर्थः। यत्र यत्र बुद्धितत्त्वे यथा यथा यादृग्रूपः सन् उदेति भासते तत्र तत्र बुद्धितत्त्वे तथा तथा आस्ते अवतिष्ठते। तथाहि बुद्धि-

---

১৬ অনু। জগতের ক্ষণিকতাহেতু জগতকে স্থির বলিয়া যে জ্ঞান হয় উহা সম্পূর্ণ ভ্রান্তি, কারণ জগৎ কখনও স্থিতিশীল নহে। জল-বুদ্বুদের ন্যায় ইহা কদাচিৎমাত্রই স্থিতি লাভ করিয়া থাকে।

১৭ অনু। একমাত্র আত্মাই পরমার্থ-সৎ। সংসারে দৃশ্যমান অপর সকল পদার্থই শুক্তিকায় রজত ও মরুভূমিতে মরীচিকার ন্যায় অসৎ।

১৮ অনু। এই আত্মা সর্ব্বগত শান্ত পরমাত্মঘন বিশুদ্ধ অচিন্ত্য চিন্মাত্রস্বরূপ ও আকাশের ন্যায় অতিবিস্তৃত।

আবির্ভাবতিরোভাবময়াস্ত্রিভুবনার্ম্ময়ঃ ।
স্ফুরন্ত্যতিততে যস্মিন্মরাবিব মরীচয়ঃ ॥ ২০
অসত্যেব সতী তাপনদ্যেব লহরীচলা ।
মনসৈবেন্দ্রজালশ্রীর্জাগতী প্রবিতন্যতে ॥ ২১
ব্রহ্মণা তন্যতে বিশ্বং মনসৈব স্বয়ম্ভুবা ।
মনোময়মতো বিশ্বং যন্নাম পরিদৃশ্যতে ॥ ২২

---

তত্ত্বং নাম আত্মনঃ সন্নিধিস্থং জ্ঞানাদিমৎ আত্মানমেব তথা তথা প্রতিভাসয়তি ইতি ভাবঃ ।

(২০) আত্মন্যেব প্রধানাদীনামাবির্ভাবতিরোভাবাবাহ আবির্ভাবেত্যাদিনা । অতিততে ব্যাপকে যস্মিন্ আত্মনি আবির্ভাবতিরোভাবময়াঃ আবির্ভাবতিরোভাবপ্রচুরাঃ ত্রিভুবনোর্ম্ময়ঃ । ত্রিজগদ্রূপতরঙ্গাঃ মরৌ মরীচয় ইব স্ফুরন্তি প্রতিভাসন্তে ।

(২১) লহরীচলা তরঙ্গ চপলা তাপনদ্যেব মরীচিনদীব । এবশব্দ ইবার্থে । জাগতী জগৎসম্বন্ধিনী ইন্দ্রজালশ্রীঃ মনসৈব অসতী অপি অস্থিরপ্রকৃতিরপি সতীব স্থিরপ্রকৃতিরিব প্রবিতন্যতে প্রকাশ্যতে ।

---

১৯ অনু। সেই আত্মা সর্ব্বগ সর্ব্বশক্তিমান্ সর্ব্বময় ও সর্ব্বাত্মক স্বপ্রকাশস্বরূপ। যেখানে যে যে রূপে তাহার প্রকাশ হয়; সেই সেই রূপেই তাহার প্রতীতি হইয়া থাকে।

২০ অনু। মরুভূমিতে যেমন মরীচিকার স্ফুরণ হয়, সেইরূপ অতি-বিস্তৃত সেই আত্মতত্ত্বে আবির্ভাব-তিরোভাবশালী ত্রিভুবনরূপ উর্ম্মি প্রকাশ পাইয়া থাকে।

২১। তাপনদী অর্থাৎ মরুমরীচিনদীর তরঙ্গ যেমন অসৎ হইলেও সদ্বস্তুর ন্যায় চঞ্চল বলিয়া প্রতীত হয়, সেইরূপ মনই জগতের ইন্দ্রজালশ্রী বিস্তার করিয়া থাকে। (অর্থাৎ জগৎ অসৎ হইলেও ইহাকে মনই অবিদ্যাপ্রভাবে সৎ বলিয়া বুঝিয়া থাকে।)

यो ह्यशुद्धमतिर्मूढो रूढो न वितते पदे।
वज्रसारमिदं तस्य जगदस्थ्यसदेव सत्॥ २३
अव्युत्पन्नस्य कनके कानके कटके यथा।
कटकज्ञप्तिरेवास्ति न मनागपि हेमधीः॥ २४

---

(२२) विश्वस्यास्य सर्व्वस्य मनोमयत्वमुपपादयति ब्रह्मणेत्यादिना। मनसैव मनःसंकल्पमात्रेणैव इत्यर्थः। तन्यते निर्म्मीयते।

(२३) अनात्मज्ञस्य जगति सत्त्वबोधमनपनेयमाह यो हीत्यादिना। वितते पदे व्यापकरूपे आत्मनि न रूढ़ः प्रतिष्ठां गतः। तथाहि यस्य मतिः सुनिर्म्मलरूपे व्यापके आत्मनि न स्थिरतां प्राप्ता तस्येत्यर्थः। वज्रसारमिति—तथाहि आत्मनि प्रतिष्ठां विना जगतो विलयस्य असम्भवेन मुक्त्यसम्भवात् तादृशस्य अनात्मज्ञस्य असदपि जगत् सत्तामिव भजत इति भावः।

(२४) अधिष्ठानतया कारणव्यपदेशभाजं पुरुषमविजानतः परिणामज्ञानं कार्य्य-मात्रज्ञानमेवेत्यत्र दृष्टान्तमाह अव्युत्पन्नस्येत्यादिना। कनके सुवर्णवलयकारणीभूते सुवर्णे अव्युत्पन्नस्य विशेषतो ज्ञानरहितस्य कानके कनकनिर्म्मिते वलये। कटक-ज्ञप्तिः कटकज्ञानम्। हेमधीः सुवर्णमिति ज्ञानं मनागपि न भवतीति शेषः।

---

২২ অনু। স্বয়ম্ভূ ব্রহ্মা মনোদ্বারাই এই বিশ্ব নির্ম্মাণ করিয়াছেন, এইজন্যই এই বিশ্বের 'মনোময়' এই নাম দেখা যায়।

২৩ অনু। যে ব্যক্তি অবিশুদ্ধমতি মূঢ়, আত্মাতে যাহার অভিজ্ঞতা জন্মে নাই, তাহার পক্ষে এই অস্থিরস্বভাব জগৎ বজ্রসার স্থির বলিয়া প্রতীত হয়।

২৪ অনু। যে ব্যক্তি স্বর্ণ জানে না, অথচ বলয় জানে, তাহার স্বর্ণ-বলয়দর্শনে কেবল বলয় বলিয়াই জ্ঞান হয়, একবারও স্বর্ণ বলিয়া জ্ঞান হয় না।

तथाऽज्ञस्य पुरागारनगनागेन्द्रभास्वरा ।
इयं दृश्यदृगेवाऽस्ति न त्वन्या परमार्थदृक् ॥ २५
इत्यादिवाक्यैर्वाशिष्ठे नाऽत्यन्तासत्यतोदिता ।
जगतोऽपरवाक्यैर्हि सत् कार्य्यं प्राकृतं मतम् ॥ २६
नामरूपविनिर्मुक्तं यस्मिन् सन्तिष्ठते जगत् ।
तमाहुः प्रकृतिं केचिन्मायामेकेऽपरे त्वणून् ॥ २७

---

(२५) दार्ष्टान्तिकमाह—तथाज्ञस्येत्यादिना । अज्ञस्य अधिष्ठानतया कारण-व्यपदेशभाजं पुरुषमविजानत इत्यर्थः । पुरागारनगनागेन्द्रभास्वरा तत्तद्वस्तुविषयिणी । दृश्यदृक् दृश्यपदार्थज्ञानम् । परमार्थदृक् आत्मस्वरूपबोधः । अत्यन्तासत्यता अत्यन्त-मिथ्यात्वम् । प्राकृत प्रकृतिपरिणामभूतम् ।

(२७) यस्मिन् मूलकारणे नामरूपविनिर्मुक्तं नामरूपशून्यं सत् जगत् सन्तिष्ठते । केचिदिति कापिलपातञ्जलादयः । एके इति वैदान्तिकाः । अपरे नैयायिकवैशेषिकाः ।

---

২৫ অনু। যে ব্যক্তি অজ্ঞ অর্থাৎ আত্মতত্ত্ববিষয়ে অনভিজ্ঞ, তাহার পুর আগার পর্ব্বত ও হস্তীপ্রভৃতি দৃশ্যবস্তুরই কেবল তত্তৎস্বরূপে জ্ঞান হয়, অন্যপ্রকার পরমার্থজ্ঞান হয় না।

২৬ অনু। বাশিষ্ঠরামায়ণে উক্তরূপ অর্থপ্রতিপাদক বাক্যসমূহ দ্বারা জগতের যে অত্যন্ত অসত্যতা নহে, ইহা প্রতিপাদিত হইয়াছে। অপর বাক্যদ্বারা প্রাকৃত কার্য্যের সত্তাও প্রতিপাদিত হইয়াছে।

২৭ অনু। যাহাতে প্রতিলোমপরিণামে জগৎ নামরূপবিনির্ম্মুক্ত ভাবে অবস্থান করে, তাহাকে প্রকৃতি কহে। উহাকেই আবার কেহ মায়া ও কেহ অণু বলিয়া ব্যাখ্যা করিয়াছেন।

सुषुप्त्यवस्थया चक्रपद्मरेखा शिलोदरे।
यथा स्थिता चितेरन्तस्तथेयं जगदावली ॥ २८
प्रकृतिव्रततिर्व्योम्नि जाता ब्रह्माण्डसत्फला।
इत्यादिवाक्यैः साङ्ख्योय-सत्कार्य्यादुयपवर्णनात् ॥ २९

इति श्रीविज्ञानभिक्षुविरचिते सांख्यसारे उत्तरभागे आत्मानात्मनोः
सत्यत्वासत्यत्ववैधर्म्यं निरूपको द्वितीयपरिच्छेदः ॥२॥

---

(२८) अधिष्ठानभूते आत्मनि लीनतया अवतिष्ठमानं जगत् प्रतिपादयति—सुषुप्त्ये-त्यादिना। चितेः आत्मनः, अन्तः अभ्यन्तरे आत्मस्वरूपे इत्यर्थः। जगदावली जगत्प्रपञ्चः।

(२९) प्रकृतिव्रततिः प्रकृतिरूपा लतिका। ब्रह्माण्डसत्फला ब्रह्माण्डरूपसत्-फलप्रसविनी।

इति सांख्यसारे उत्तरभागे द्वितीयपरिच्छेदटीका समाप्ता ॥२॥

---

২৮ অনু। টঙ্ক বা পাষাণবিদারক অস্ত্রের দ্বারা ছেদনের পূর্ব্বে যেমন শিলার অভ্যন্তরে চক্রপদ্মরেখাপ্রভৃতি দৃষ্ট হয়, সেইরূপ তত্ত্বজ্ঞানের পূর্ব্বকালে আত্মার অভ্যন্তরে জগৎ নানারূপে পরিদৃষ্ট হইয়া থাকে।

২৯ অনু। (আত্মস্বরূপ) আকাশে প্রকৃতিনামে একটী লতা আছে, উহার ফল ব্রহ্মাণ্ড। এই সকল বাক্যদ্বারা সাংখ্যমতসিদ্ধ সৎকার্য্যবাদ-প্রভৃতি বর্ণিত হইয়াছে।

সাঙ্খ্যসার-উত্তরভাগে দ্বিতীয়পরিচ্ছেদের অনুবাদ সমাপ্ত ॥ ২

---

# अथ तृतीयः परिच्छेदः ।

तदेवमात्मनः सत्ता दर्शिताऽन्यविलक्षणा ।
अथ चिद्रूपतां वक्ष्ये बुद्धिवृत्तिविलक्षणाम् ॥ १

अनुभूतिश्चितिर्बोधो वेदनं चोच्यते पुमान् ।
वेद्यं जड़ं तमोऽज्ञानं प्रधानादिकमुच्यते ॥ २

वेदनं वेद्यसम्बन्धादेव वेत्तभिधीयते ।
यथा प्रकाश्यसम्बन्धात् प्रकाशोऽपि प्रकाशकः ॥ ३

---

(१) अथात्मनः प्रकृतिविलक्षणां चिद्रूपतामाह—तदेवमित्यादिना । अन्येभ्यः प्रधानादिभ्यः विलक्षणा विभिन्नप्रकारा सत्ता अपरिणामिसत्तापराख्य-पारमार्थिकसत्तेत्यर्थः । दर्शितेति पूर्व्वोक्त-द्वितीयपरिच्छेदे इति शेषः । बुद्धिवृत्तिविलक्षणां बुद्धिवृत्तिविसदृशस्वरूपाम् । तथाहि या चिद्रूपता बुद्धिवृत्त्यतिरिक्तेत्यर्थः । वक्ष्ये इति प्रतिपादयिष्यामि इत्यर्थः । एतेन प्रतिज्ञावाक्यत्वमस्य स्फुटमवगम्यते ।

(२) अनुभूत्यादि-पदवाच्यतामात्मनः अज्ञानादिपदवाच्यताञ्च प्रकृत्यादेः प्रतिपादयन् उभयोः परस्परविलक्षणरूपतां प्रतिपादयति—अनुभूतिरित्यादिना । पुमान् आत्मा । वेद्यं प्रकाश्यम् ।

---

১ অনু। এইরূপে পূর্ব্বপরিচ্ছেদে আত্মার অন্য অপেক্ষা বিলক্ষণ সত্তা দেখান হইয়াছে। অনন্তর বুদ্ধিবৃত্তি হইতে বিলক্ষণ চিদ্রূপতা প্রদর্শিত হইতেছে।

২ অনু। পুরুষ অর্থাৎ আত্মাকে অনুভূতি, চিতি, বোধ এবং বেদন শব্দে ব্যবহার করা হইয়া থাকে। প্রধানাদিকে বেদ্য জড় তমঃ ও অজ্ঞানপদে ব্যবহার করা হয়।

यथा वाऽर्थोपरागेण भानमर्थस्य भासकम् ।
एवं वेद्योपरक्तस्याऽस्यांशस्याधारतांशिनि ॥ ४
असङ्गायां चितौ वेद्योपरागोऽयं न धीष्विव ।
किन्तु साक्षाद् द्वारता वा चिति तत्प्रतिविम्बनम् ॥ ५
वाह्यं वृत्त्याद्यकरणाभावादनुपरागतः ।
चितिर्नैवेक्षते चेत्थं विभुत्वेऽपि च सर्वतः ॥ ६

---

(३) नन्वात्मनो वेदनरूपत्वमुक्तं तत् कथं तस्य वेत्तृत्वमित्याशङ्कायामाह—वेदनमित्यादि । वेदनं ज्ञानं, वेद्यसम्बन्धात् दृश्यप्रधानादिसम्बन्धात् वेत्तृ अभिधीयते । तत्रैव दृष्टान्तमाह यथेत्यादिना ।

(४) दृष्टान्तान्तरमाह—यद्वेत्यादिना । अर्थोपरागेण अर्थस्य विषयीकरणेन, भानं ज्ञानम्, अर्थस्य विषयस्य, भासकं प्रकाशकम् । एवं वेद्योपरक्तस्य वेद्यसम्बद्धस्य अस्य अंशस्य सविशेषज्ञानस्य अंशिनि विम्बभूते आत्मनि आधारता भवतीति शेषः ।

(५) नन्वात्मनोऽपि सति वेद्योपरागे कथमसङ्गत्वश्रुतिरुपपद्यत इति आशङ्कायामाह—असङ्गायामित्यादि । अयं आत्मनि वर्तमानः वेद्योपरागः वेद्यसम्बन्धः धीषु बुद्धिष्विव न सम्भवतीति शेषः । साक्षादिति बुद्धि-तद्वृत्ति-तदारूढपदार्थानाम् । द्वारत इति प्रकृत्यादीनां परम्परा वृत्तिद्वारा चिति आत्मनि तत्प्रतिविम्बनं वेद्यप्रतिविम्बसमर्पणम् इति ।

---

৩ অনু। যেমন প্রকাশ প্রকাশ্যবস্তুর সম্বন্ধহেতু প্রকাশক নামে অভিহিত হয়, সেইরূপ উক্ত বেদনই আবার বেদ্যবস্তুর সম্বন্ধহেতু বেত্তৃ-নামে অভিহিত হইয়া থাকে।

৪ অনু। যেরূপ অর্থোপরাগে জ্ঞান অর্থের ভাসক সেইরূপ বেদ্য-বস্তুসম্বন্ধে অংশী আত্মায় বিশিষ্ট জ্ঞানের আধারতা জানিবে।

৫ অনু। অসঙ্গ চিতিপদার্থে যে বেদ্যোপরাগ তাহা বুদ্ধির ন্যায় বাস্তবিক নহে, পরন্তু সাক্ষাৎ অথবা কোনও বস্তুকে দ্বার করিয়া বেদ্য-বস্তুর প্রতিবিম্বস্বরূপ বেদ্যোপরাগ হয়।

তথা চিদপি বৃত্ত্যাখ্যকরণাভাবতোঽর্থবৎ।
স্বগোচরাং বৃমিত্তৃতে তিষ্ঠত্যজ্ঞাতসত্তয়া॥ ৭
তদেবং চিন্নিরাকারা প্রকাশাকাশরূপিণী।
তিষ্ঠত্যব্যক্তরূপা চ মোক্ষাদৌ বৃত্ত্যভাবতঃ॥ ৮

---

(৬) আত্মনো বিভুত্বেন নিঃখিলবাহ্যবস্তুসম্বন্ধে সত্যপি বুদ্ধিবৃত্তিমন্তরেণ প্রকাশকত্বানুপপত্তিমুপদর্শ্য বুদ্ধিবৃত্তিকল্পনস্য প্রয়োজনমুপপাদয়তি—বাহ্যমিত্যাদিনা। বৃত্ত্যাখ্যকরণাভাবাদিতি, বৃত্তিদ্বারা তমসঃ অপসারণমন্তরেণ আত্মনা বাহ্যবস্তুপ্রকাশকত্বমসম্ভবমিতি অতো বৃত্ত্যাখ্যকরণাভাব এব বিভোরপি আত্মনঃ প্রকৃতে বাহ্যসকলবস্তুভানাভাবে হেতুরিতি ভাবঃ।

(৭) বাহ্যবস্তুভানার্থমাবশ্যকেঽপি বৃত্ত্যঙ্গীকারে প্রকাশাত্মকস্য আত্মনো ভানার্থং কথং বৃত্ত্যঙ্গীকার আবশ্যক ইত্যাকাঙ্ক্ষায়ামাহ—তথেত্যাদি। বুদ্ধৌ আত্মনঃ প্রতিবিম্বং বিনা আত্মনা আত্মনো গ্রহণস্যাসম্ভবেন বুদ্ধিবৃত্তৌ আত্মনঃ প্রতিবিম্বঃ অঙ্গীকার্য্যঃ।

(৮) তদেবমিত্যাদি। নিরাকারা ঔপাধিকসম্বন্ধবিরহেণ স্বগতযাবদাকার-রহিতা। প্রকাশাকাশরূপিণী প্রকাশসহিতাকাশসদৃশী। অব্যক্তরূপা অজ্ঞাত-সত্তাকা। মোক্ষদশায়াং বৃত্ত্যভাবেন আত্মনঃ অজ্ঞাতসত্তয়া বর্ত্তমানত্বাৎ বৃত্তিসত্ত্বে-নৈব চ অন্যথা আত্মজ্ঞানস্য অনুৎপাদাৎ অন্বয়েন ব্যতিরেকেণ চ আত্মজ্ঞানে বৃত্তিরাব-শ্যকীতি ভাবঃ।

---

৬ অনু। চিতিপদার্থ বিভু হইলেও বৃত্তিরূপ করণের অভাবহেতু উপরাগ না থাকায় বাহ্যপ্রকাশ্যবস্তু চিতি দর্শন করে না।

৭ অনু। ঐরূপ চিতি অর্থবৎ বৃত্তিরূপ করণের অভাবহেতু নিজগোচর বৃত্তিব্যতিরেকে অজ্ঞাতসত্তায় অবস্থান করে।

৮ অনু। এইরূপ প্রকাশযুক্ত আকাশতুল্য নিরাকারা চিৎ মোক্ষ ও সুষুপ্ত্যাদি অবস্থায় বৃত্তির অভাববশতঃ অব্যক্তরূপে অবস্থান করে।

बुद्धिवृत्तिस्तु साकारा परिच्छिन्ना च दीपवत् ।
व्यक्ता च सर्वदा तद्वदसङ्ख्या क्षणभङ्गुरा ॥ ९

जड़ा च परदृश्यत्वाद् घटा दीपादिवन्मता ।
वृत्तेः प्रकाशता त्वर्थाकारत्वादक्षतैव हि ॥ १०

यथाऽस्याकारताहँत्वादादर्शस्तत्प्रकाशकः ।
सर्वाकारत्व-योग्यत्वात् सैवं सर्वप्रकाशिका ॥ ११

---

(९) बुद्धिवृत्तेः चिदपेक्षया प्रकारान्तरं प्रतिपादयति—वृत्तीत्यादिना । साकारा विषयाकाराकारिता विषयाकारेण प्रकाशिता इत्यर्थः । तथाहि—चित् किल निराकारा अपरिच्छिन्ना सार्व्वदिक-व्यक्तियुक्ता नित्या च, बुद्धिवृत्तिस्तु तद्विपरीता इति भावः ।

(१०) परदृश्यत्वात् परप्रकाश्यत्वात् । अर्थाकारत्वात् विषयाकारसम्बन्धात् । प्रकाशता विषयप्रकाशनकारित्वमित्यर्थः ।

(११) आदर्शदृष्टान्तेन वृत्तेः सर्व्वप्रकाशकत्वमुपपादयति—यथेत्यादिना । आस्याकारताहँत्वात् सुखाकारयोग्यत्वात् । तत्प्रकाशकः मुखप्रकाशकः । सा बुद्धिवृत्तिः । सर्व्वप्रकाशिका सकलवस्तुप्रकाशजनिका ।

---

৯ অনু। বুদ্ধিবৃত্তি দীপের তুল্য সাকার পরিচ্ছিন্ন সর্ব্বদা ব্যক্ত অসংখ্য ও ক্ষণভঙ্গুর।

১০ অনু। উহা পরপ্রকাশ্য বলিয়া জড়। ঘটপ্রকাশক দীপাদির ন্যায় উহা অর্থাকার হয় বলিয়া বৃত্তির প্রকাশকত্ব অব্যাহত জানিবে।

১১ অনু। যেমন আদর্শ মুখের আকার ধারণ করিবার যোগ বলিয়া উহা মুখের প্রকাশক, সেইরূপ সকল আকার ধারণ করিবার যোগ্যতাহেতু বৃত্তি সর্ব্বপ্রকাশক।

न पुनर्वृत्ति-द्रष्टृत्वं चितस्तद्भिन्नद्रष्टृता ।
वृत्तेर्यतो गौरवं स्यात् तयोर्ज्ञातृत्वकल्पने ॥ १२

बुद्ध्यारूढं त्वन्यवस्तु तद्द्वारा प्रतिविम्बितम् ।
पश्यत्यनुभवो नाऽन्यो द्रष्टा बुद्ध्यादिकोऽखिलः ॥ १३

इत्येवं बुद्धिवृत्तिभ्यो वैलक्षण्यं चितीरितम् ।
चिदचित्त्वाख्यवैधर्म्यं देहादिभ्यः स्फुटन्त्विदम् ॥ १४

अन्योन्यप्रतिविम्बेन सारूप्याद् वृत्तिबोधयोः ।
बोधव्यवहृतिर्वृत्तौ लोहेऽग्निव्यवहारवत् ॥ १५

---

(१२) द्रष्टृत्वरूपेण आत्मनि वृत्तिविवेकमुपपादयति—न पुनरित्यादिना । न पुनरिति वाच्यमिति शेषः । तयोरिति वृत्तेरात्मनश्च इत्यर्थः । तथाहि आत्मनि वृत्ति-द्रष्टृत्वस्यादि स्वीकारेण लाघवम् अन्यत्र वृत्तौ द्रष्टृत्वकल्पनस्य गौरवग्रस्तमिति भावः ।

(१३) बुद्ध्यारूढमित्यादि । तद्द्वारा बुद्धिवृत्तिद्वारा ; अनुभव इति अनुभवरूप इत्यर्थः । अन्य इति अनुभवरूपात्मभिन्न इत्यर्थः ।

(१४) इत्येवमित्यादि । इत्येवं निरुक्तप्रकारेण इत्यर्थः ; चिति आत्मनि । वैलक्षण्यं विवेकः । स्फुटं वैलक्षण्यं कथयति चिदित्यादिना । तथाहि आत्मनि चित्त्वं तद्भिन्ने च अचित्त्वमिति आत्मनस्तद्भिन्नदेहादीनां विरुद्धधर्मकत्वमक्षतमिति भावः ।

---

১২ অনু। আত্মা বৃত্তিদ্রষ্টা ও বৃত্তি তদ্ভিন্ন দ্রষ্টা এরূপ নহে। কারণ, আত্মা ও বৃত্তি উভয়ের জ্ঞাতৃত্ব-কল্পনায় গৌরব হইয়া পড়ে।

১৩ অনু। বুদ্ধিতে যে বস্তু আরূঢ় হয়; উক্ত বস্তু বুদ্ধিবৃত্তিতে প্রতি-বিম্বিত হইলে অনুভবরূপ আত্মা দর্শন করেন। বুদ্ধ্যাদি উহার দ্রষ্টা নহে।

১৪ অনু। এইরূপে আত্মাতে বুদ্ধিবৃত্তি হইতে বৈলক্ষণ্য বলা হইল। দেহাদি হইতে আত্মার চিৎস্বরূপ ও অচিৎস্বরূপত্ব ধর্ম্ম লইয়া বৈধর্ম্ম্য স্ফুটভাবেই প্রতীত হইয়া থাকে।

नैवाल्पबुद्ध्या शक्योऽयं विवेको वृत्तिबोधयोः ।
तार्किका यत्र सम्मूढ़ाः साङ्ख्यानां श्रेष्ठता यतः ॥ १६

विज्ञानवादिनो बौद्धा वृत्तिबोधाविवेकतः ।
ज्ञानात्मत्वश्रुतौ मूढ़ा मेनिरे क्षणिकां चितिम् ॥ १७

---

(१५) चिद्भिन्नायामपि वृत्तौ बोधव्यवहारमुपपादयति—अन्योन्येत्यादिना । सारूप्यात् तुल्यधर्म्मयोगात् । लौहे अन्यु काधातिशयेन अग्निवत् प्रतीयमाने दाहजनके लौहगोलके अग्निव्यवहारवत् अग्निगत-दाहकत्वसाधर्म्येण अग्निरिति प्रयोगवदित्यर्थः । तथाहि वृत्तौ चैतन्यकदना-व्यवहारो न यथार्थः, परन्तौपाधिक एव, अतः न चितौ विवेकस्तवावश्य इति भावः ।

(१६) नैवेत्यादि । अयं विवेक इति निरुक्तप्रकारो भेदः । तत्र वृत्तिबोधयोः विवेके । तार्किकाः बौद्धादयः । सांख्यानां सांख्यतत्त्ववेदामित्यर्थः ।

(१७) तार्किकाणां सम्मूढ़त्वमेव दर्शयति विज्ञानेत्यादिना । विज्ञानवादिनः क्षणिकविज्ञानात्मवादिनः । क्षणिकां क्षणमात्रस्थायिनीं चितिं ज्ञानमात्मानमित्यर्थः । तथाहि श्रुत्या ज्ञानस्य आत्मत्वं प्रतिपादितम्, वृत्तिश्च क्षणिकविज्ञानरूपा तदनयोरविवेकेन एव क्षणिकविज्ञानरूप आत्मा सिध्यतीति तन्मतमवतिष्ठत इति भावः ।

---

১৫ অনু। বৃত্তি এবং বোধ এই উভয়পদার্থে পরস্পর প্রতিবিম্বপাতহেতু সারূপ্য উপস্থিত হওয়ায় লোহে অগ্নি ব্যবহারের ন্যায় বৃত্তিতে বোধব্যবহার হইয়া থাকে।

১৬ অনু। অল্পবুদ্ধি ব্যক্তি বৃত্তি ও বোধের ভেদ বুঝিতে পারে না। যে বিষয়ে তার্কিকগণপর্য্যন্ত অত্যন্ত মূঢ়, উক্ত বৃত্তি ও বোধের বিবেক লইয়াই সাংখ্যতত্ত্বজ্ঞ ব্যক্তিগণের শ্রেষ্ঠতা জানিবে।

১৭ অনু। বিজ্ঞানবাদী বৌদ্ধগণ বৃত্তি ও বোধের অবিবেকহেতু জ্ঞানের আত্মত্বপ্রতিপাদক শ্রুতিবিষয়ে মূঢ়তাবশতঃ ক্ষণিক চিতি বা জ্ঞানই আত্মা স্থির করিয়াছেন।

सत्त्वपुंसो विवेकोऽयं वृत्तितद्बोधरूपयोः ।
नाशक्यः सुधियां यद्वद्धंसानां क्षीरनीरयोः ॥ १८

एतदन्तस्तु संसारो मोक्षस्तत्रैव संस्थितः ।
यद् वृत्तिभ्यो विवेकेन तद्बोधस्यावधारणम् ॥ १९

सर्वोऽप्यनुभवं वेद न कश्चिदपि वेदनाम् ।
विवेकमात्रमस्मिन् हि भासमानेऽप्यपेक्षते ॥ २०

---

(१८) विवेकिनां तद्विवेकस्य न दुर्घटत्वमित्याह—सत्त्वेत्यादिना । सुधियामिति विमलबुद्धिशालिनां सांख्यादीनामित्यर्थः । तथाहि यथा परस्परसंसर्गेण एकीभावं गतयोः क्षीरनीरयोर्भेदस्य अन्येन दुर्घटत्वेऽपि हंसेन सुघटत्वं, तथैव वृत्ति-बोधयोर्विवेकस्य अल्पबुद्धिभिरसुघटत्वेऽपि निपुणबुद्धिभिर्न दुर्घटत्वमिति भावः ।

१९ । एतदन्तइत्यादि । एतदन्तः विवेकज्ञानपर्य्यवसानः । तत्रैव निरुक्त-विवेकज्ञान एव । संस्थित इति जनकतासम्बन्धेनेति शेषः । तथाहि अस्य विवेक-ज्ञानस्यैव परमपुरुषार्थमोक्षसाधनतया तदिदं सर्व्वतः समुत्कृष्टमिति भावः ।

(२०) अन्यथापि अनुभवरूपे आत्मनि वृत्तिभेदं साधयति—सर्व्वोऽपीत्यादिना । अनुभवम् अनुभवरूपमात्मानम् । तामिति अनुभवेनामिश्रितवृत्तिमित्यर्थः । हि यस्मात् भासमानेऽपि अनुभूयमानेऽपि विवेकमात्रं वृत्तिभेदः । तथाहि यदि अनुभवरूपः आत्मा वृत्तिश्च पृथगेव न स्याताम्, तर्हि यदा यदा अनुभवस्य वेदनं तदा तदा वृत्तेरपि वेदनं युक्ततया आपद्येत, अतः तदभावात् तदभाव इति भावः ।

---

১৮ অনু। বৃত্তি ও তদীয় বোধরূপ সত্ত্ব ও পুরুষের এই ভেদ সুধীগণের পক্ষে বুঝিতে পারা অসম্ভব নহে, যেমন হংসগণের পক্ষে পরস্পর মিশ্রিত জল ও দুগ্ধের ভেদ দুর্ব্বোধ নহে সেইরূপ।

১৯ অনু। বৃত্তি হইতে তদ্‌বোধের বিভিন্নরূপে অবধারণ করিতে পারিলে সংসারের অবসান হয়; উহাতেই মোক্ষ অবস্থিত।



২০ অনু। সকলেই অনুভববিষয়ে একটা প্রত্যক্ষ করিয়া থাকে,

आत्मा विविक्तं बाह्यार्थे न शक्यो वृत्तिमिश्रणात्।
अतो वृत्तौ विवेक्तव्यो वृत्तिबोधतयैव सः॥ २१
अतो बुद्ध्या विविक्तार्हो नाग्निरङ्गारमिश्रणात्।
सोऽङ्गारे तु विविक्तार्हो काष्ठदग्धृतया स्फुटम्॥ २२
अत एव श्रुतौ स्वप्ने दृश्यवृत्तिविविक्ततः।
स्वयं ज्योतिःस्वरूपेण तस्या द्रष्टा प्रदर्शितः॥ २३

---

(२१) वृत्तिमिश्रणादिति। बाह्यार्थविषयकवृत्त्या आत्मनः अविवेकादित्यर्थः। वृत्तिबोधतया वृत्तिप्रकाशकतयेत्यर्थः।

(२२) काष्ठदग्धृतयेति काष्ठदाहकतयेत्यर्थः। तथाहि अङ्गारेण अग्नेरतिमिश्रणेऽपि काष्ठदाहकत्वरूपधर्मविशेषेण अङ्गारादग्निर्विविच्यते यथा—तथेत्यर्थः।

(२३) स्वप्ने स्वप्नावस्थायाम्। दृश्यवृत्तीत्यादि—दृश्या या वृत्तिः तद्विवेकतः तद्भेदेन। तदानीं बाह्यपदार्थसम्बन्धविरहात् बुद्धिवृत्तेरेव दृश्यत्वात् आत्मनस्तद्द्रष्टृत्वात् दृश्यद्रष्टृरूपवैधर्म्येण बुद्धिवृत्तेरात्मनि द्रष्टरि भेदग्रहः सुघट एवेति भावः।

---

কিন্তু কেহই উক্ত অনুভববিষয়ে অবিমিশ্রিতরূপে বৃত্তির প্রত্যক্ষ করে না। অতএব অনুভূয়মান এই স্বপ্রকাশ আত্মাতে বৃত্তিভেদ অবশ্যই মানিতে হইবে।

২১ অনু। বৃত্তিদ্বারা বাহ্যার্থে আত্মার মিশ্রণবশতই বাহ্যার্থ হইতেও সহসা আত্মার ভেদোপলব্ধি হয় না এইজন্য বৃত্তিপ্রকাশকরূপে বৃত্তিতে উহার ভেদ বুঝিতে হইবে।

২২ অনু। অঙ্গারের সহিত যেমন অগ্নি অতি ঘনিষ্ঠভাবে সম্বদ্ধ বলিয়া বুদ্ধিদ্বারা উহা ভিন্নরূপে উপলব্ধ হয় না, পরন্তু কাষ্ঠের দাহকরূপে উহার বিবেক অঙ্গারে স্ফুটভাবে বুঝিতে হয়, সেইরূপ বৃত্তিপ্রকাশকরূপে বৃত্তিতে আত্মার ভেদ জানিতে হয়।

২৩ অনু। এইজন্যই শ্রুতিতে স্বপ্নদশায় দৃশ্যবিষয়ক বৃত্তি হইতে বিভিন্ন স্বয়ং জ্যোতিঃস্বরূপে উহার দ্রষ্টা প্রদর্শিত হইয়াছে।

সাক্ষাৎপ্রকাশো যো যস্য স তদ্ভিন্নো মতো বুধৈঃ।
ঘটাদিভ্যো যথালোক আলোকাচ্চাপি বৃত্তয়ঃ ॥ ২৪
বৃত্তেঃ সাক্ষাৎ প্রকাশত্বাদতোঽনুভবরূপকঃ।
বৃত্তিভ্যো ভিন্ন আত্মেতি মোক্ষো মার্গঃ স্বদর্শনে ॥ ২৫
এবমাদিপ্রকারেণ বুদ্ধিসত্ত্বপ্রকাশতঃ।
বিলক্ষণতয়া সিদ্ধশ্চিৎপ্রকাশোঽস্য ভাসকঃ ॥ ২৬

---

(২৪) ব্যাপ্তিমুপদর্শ্য ব্যাপ্তিজ্ঞানমূলকমনুমানং প্রকৃতে সমর্থয়তি—সাক্ষাদিত্যাদিনা। সাক্ষাৎপ্রকাশঃ সাক্ষাৎপ্রকাশয়তি ইতি ব্যুৎপত্তিযোগাৎ সাক্ষাৎপ্রকাশকঃ ইত্যর্থঃ। ঘটাদিভ্য ইতি দৃষ্টান্তপ্রদর্শনম্। সাক্ষাৎপ্রকাশ ইত্যাদিনা ব্যাপ্তিপ্রদর্শনম্।

(২৫) বৃত্তেরিত্যাদি—সাক্ষাৎপ্রকাশত্বাৎ সাক্ষাৎপ্রকাশকত্বাৎ। স্বদর্শনে ইতি আত্মনো জ্ঞানে। স্বদর্শনে কাপিলদর্শন ইত্যর্থ ইতি কেচিদাহুঃ। তথাহি—যথা আলোকঃ ঘটস্য সাক্ষাৎপ্রকাশকঃ ঘটাচ্চ ভিন্নশ্চ তথা আত্মা বৃত্তেঃ সাক্ষাৎপ্রকাশকঃ বৃত্তের্ভিন্নশ্চ ইতি ভাবঃ।

(২৬) বুদ্ধিসত্ত্বপ্রকাশত ইতি বুদ্ধিসত্ত্বরূপপ্রকাশাৎ বিলক্ষণতয়া পার্থক্যেন। অস্য বুদ্ধিসত্ত্বাখ্যপ্রকাশস্য ভাসকঃ প্রকাশকঃ সিদ্ধঃ। তথাহি নিরুক্তপ্রকারৈরেব বুদ্ধিসত্ত্বাদাত্মনো বিবেকঃ সিধ্যতীতি ভাবঃ।

---

২৪ অনু। যে যাহার সাক্ষাৎপ্রকাশক, পণ্ডিতগণ তাহাকে তদপেক্ষা পৃথক্ বলিয়াছেন। যেমন ঘটপ্রভৃতির প্রকাশক আলোক হইতে ঘটাদি ও আলোক হইতে বৃত্তি পৃথক্।

২৫ অনু। অতএব বৃত্তির সাক্ষাৎপ্রকাশক বলিয়া অনুভবরূপ আত্মা বৃত্তি হইতে ভিন্ন ইহাই আত্মদর্শনে অবলম্বিত মার্গ।

২৬ অনু। এইরূপে বুদ্ধিসত্ত্বপ্রকাশ হইতে ইহার ভাসক চিৎপ্রকাশ বিলক্ষণরূপে সিদ্ধ হইয়া থাকে।

स्वप्नदेहादिदृष्टान्तैस्तस्माच्छ्रुत्यादिदर्शितैः।
जाग्रद्देहेन्द्रियार्थेभ्यश्चितिर्भिन्नतया मता॥ २७

स्वप्ने देहादिकं सर्वं चिद्भिन्नं चिति भासते।
जाग्रत्येवं विशेषस्तु यद् वाह्यमपि भासते॥ २८

स्वप्ने मनोमयत्वाच्च साक्षाच्चिद्विषयोऽखिलम्।
करणद्वारतो वाह्यं चितो जाग्रति गोचरः॥ २९

सर्वं देहादिकं स्वप्नजाग्रतोरेकरूपतः।
भाति चिद्व्योम्नि नानार्थंवाह्यान्तर्भेदतो भिदा॥ ३०

---

(२७) स्वप्नदृश्येभ्यः आत्मनो विवेकं दृष्टान्तीकृत्य जाग्रद्दृश्येभ्योऽपि आत्मनो विवेकमुपपादयति—स्वप्नदेहादीत्यादिना।

(२८) स्वप्न इत्यादि। देहादिकमिति—आत्मनो देहप्रभृतिकं न तु वाह्यार्थोऽपीति भावः।

(२९) मनोमयत्वात् मनःपरिणामभूतत्वात्। साक्षादिति न तु इन्द्रियद्वारेणेति भावः। जाग्रति जाग्रदवस्थायां वाह्यं वस्तु करणद्वारतः इन्द्रियद्वारेण। चितो गोचरः चिद्विषय इत्यर्थः।

---

२৭ অনু। শ্রুতিপ্রভৃতির প্রদর্শিত স্বপ্ন-দেহাদিদৃষ্টান্তদ্বারা জাগ্রদ্দশার দেহ ও ইন্দ্রিয়াদি হইতে চিতি ভিন্ন ইহাই কথিত আছে।

২৮ অনু। স্বপ্নাবস্থায় দেহাদি সমস্ত চিদ্ভিন্ন বস্তুই চিতিতে প্রকাশিত হয়, জাগ্রদবস্থাতে ইহাই বিশেষ যে বাহ্যবস্তুও উহাতে প্রতিবিম্বিত হয়।

২৯ অনু। স্বপ্নাবস্থায় দৃষ্ট বস্তুগুলি মনোময় বলিয়া সাক্ষাৎ চিতির বিষয়ীভূত। জাগ্রদবস্থায় ইন্দ্রিয়কে দ্বার করিয়া বাহ্যবস্তু চিতির বিষয়ীভূত হইয়া থাকে।

चिद्व्योम्नि वासनातो धीः प्रमाणाद् वाऽर्थरूपिणी ।
ततश्चितोऽर्थभानं यत् तत् समं स्वप्नजाग्रतोः ॥ ३१

तदिदं स्वानुभूत्यैव प्रोच्यते न परोक्षतः ।
स्वप्नदृष्टान्तसदृशो नोपायोऽस्त्यात्मदर्शने ॥ ३२

सुषुप्तौ हि यथा स्वप्ने स्वात्मन्येवेक्षतेऽखिलम् ।
आत्मानं चैकदेशस्थं मन्यते जागरे तथा ॥ ३३

---

(३०) स्वप्नजाग्रतोः स्वप्नावस्थायां जाग्रदवस्थायाञ्च । एकरूपतः अभिन्नप्रकारेण । चिद्व्योम्नि आकाशवत् सर्व्वव्यापकं चित्पदार्थे । अर्थबाह्यान्तर्भेदत इति अर्थस्य विषयस्य बाह्याभ्यन्तरपार्थक्येण इत्यर्थः । तथाहि—यथा बाह्यं वस्तु देहादिकं जाग्रदवस्थायां चिति भासते तथैवान्तरमपीति न तु प्रकारान्तरेण इति भावः ।

(३१) वासनातो वासनारूपकारणात् धीः ज्ञानम् इदं स्वाप्निकभानविवरणम् । प्रमाणात् प्रत्यक्षादिप्रमाणात् । अर्थरूपिणी विषयाकारा । प्रमाणादिति जाग्रदवस्थाभानविवरणम् । सममिति—उभयत्रैव बुद्धेरर्थाकारतायाः अवैलक्षण्यादिति भावः ।

(३२) तदिदमित्यादि । तथाहि स्वानुभव एवात्र मानमिति भावः ।

(३३) सुषुप्तावपि स्वप्नजाग्रदवस्थयोरिव आत्मानुभवमुपपादयति—सुषुप्तावित्यादिना ।

---

৩০ অনু। স্বপ্ন ও জাগ্রদবস্থায় একই রূপে চিদাকাশে সমস্ত দেহাদি প্রকাশিত হয়, এস্থলে বাহ্য ও অভ্যন্তরভেদে কোনও রূপ ভেদ নাই।

৩১ অনু। চিদাকাশে বাসনা হইতে অথবা প্রমাণ হইতে অর্থাকার বুদ্ধি হয়, অনন্তর যে চৈতন্যদ্বারা অর্থের ভান হয়, উহা স্বপ্ন ও জাগ্রদবস্থায় তুল্য।

৩২ অনু। উক্ত বিষয় নিজ অনুভূতিদ্বারা প্রত্যক্ষ করিয়াই বলিতেছি, পরোক্ষরূপে বলিতেছি না। আত্মদর্শনবিষয়ে স্বপ্নদৃষ্টান্তের মত আর অন্য কোনও উপায় নাই।

सुषुप्तिरात्मनस्तत्त्वं स्वरूपावस्थितैस्तदा।
जाग्रत्स्वप्नौ मायिकौ तु मृषासारूप्यतो धिया ॥ ३४
बुद्धेः सुषुप्तिस्तमसावरणं तद्विलक्षणा।
चितेः सुषुप्तिर्वृत्त्याख्यदृश्यावरणशून्यता ॥ ३५
पूर्णः कूटस्थनित्यश्च स्वस्वधीमात्रवृत्तिदृक्।
वृत्त्याख्यदृश्यविरहात् सर्वदा नैव तत्पुमान् ॥ ३६

---

(३४) जाग्रत्स्वप्नावस्थापेक्षया सुषुप्त्यवस्थाया आत्मनि विशेषमाह—सुषुप्तिरित्यादिना। तत्त्वं याथार्थ्यमित्यर्थः। तदा सुषुप्तौ आत्मनः स्वरूपस्य अवस्थितैः। मृषासारूप्यतः बुद्धितत्त्वेन सह मिथ्याभूताभेदभानादित्यर्थः। तथाहि मायिकत्वात् जाग्रत्स्वप्नयोरमायिकत्वाच्च सुषुप्त्यवस्थायास्तदैव स्वरूपमात्मन उपलब्धुं शक्यत इति भावः।

(३५) बुद्ध्यात्मनोरुभयोरेव विलक्षणरूपां सुषुप्तिमाह बुद्धेरित्यादिना। तमसा तमोगुणेन आवरणम् आच्छादनम्।

(३६) कूटस्थनित्य इति नैवत इत्यत्र हेतुः। धीमात्रेति मात्रशब्दस्य इतरव्यावर्त्तकतया बुद्ध्यन्तरदर्शनं व्यावर्त्त्यते।

---

৩৩ অনু। স্বপ্নাবস্থায় যেমন নিজ আত্মাতেই অখিল বস্তুর জ্ঞান হয়, সেইরূপ সুষুপ্তি অবস্থায় ও জাগরাবস্থায় একদেশস্থ আত্মা জ্ঞানগোচর হয়।

৩৪ অনু। সুষুপ্তি অবস্থায় আত্মার স্বরূপাবস্থিতি হয় বলিয়া উহাই আত্মার যথার্থ স্বরূপাবস্থা। জাগ্রৎ ও স্বপ্ন এই দুইটী অবস্থা মায়িক, কারণ উহাতে বুদ্ধিদ্বারা মিথ্যা সারূপ্যবোধ হয়।

৩৫ অনু। তমোগুণদ্বারা আবরণই বুদ্ধির সুষুপ্তি। আত্মার সুষুপ্তি বৃত্ত্যাখ্য দৃশ্যাবরণশূন্যতা অতএব উহা পূর্ব্বোক্ত সুষুপ্তি হইতে অন্যপ্রকার।

वृत्तिदेशे यथा बोधस्तथा सर्वत्र सर्वदा ।
वृथैव तप्यते मूढैर्व्ययनाशादिनात्मनः ॥ ३७

दुःखभोगमहारोगनिदानं देहगेहिनी ।
बुद्धिर्न त्यज्यते मूढैर्महानिद्रासुखं यतः ॥ ३८

अनादिबुद्धिगार्हस्थ्यं विवेकस्त्यज्यते न चेत् ।
न मोक्षो बाह्यसंन्यासादिहाऽमुत्रासुखं परम् ॥ ३९

---

(३७) मूढैरिति—बुद्ध्यात्मनोरविवेकवद्भिरित्यर्थः ।

(३८) दुःखेत्यादि । देहगेहिनी देहरूपगेहाधिष्ठात्री बुद्धिः दुःखभोगमहारोगनिदानं दुःखभोगहेतुः । तथाहि बुद्धिरेव दुःखमनुभावयति आत्मानम्, न तु वस्तुतोऽपि आत्मनो दुःखसत्त्वमिति भावः ।

(३९) अनादीत्यादि ।—बाह्यसन्न्यासात् बाह्यवस्तुपरित्यागात् । बाह्यवस्तुभ्यः मनसः प्रत्याहारादपीत्यर्थः । परं किन्तु इह इहलोके अमुत्र परलोके च असुखं दुःखमेव इत्यर्थः । तथाहि मोक्षकामिणा अनादिबुद्धिगार्हस्थ्यं परिहेयमिति भावः ।

---

৩৬ অন্থ। পূর্ণ কূটস্থনিত্য আত্মা স্বস্ববুদ্ধিবৃত্তিকে মাত্র প্রকাশ করে। বৃত্ত্যাখ্য দৃশ্য সর্ব্বদা থাকে না বলিয়া পুরুষ সর্ব্বদা দ্রষ্টা নহে।

৩৭ অন্থ। বৃত্তির অবচ্ছেদকীভূত দেশে যখন যেরূপ বোধ হয়, আত্মা তথায় তখন সেইরূপ আকারে প্রতীত হয় মাত্র। মূঢ়গণই আত্মার ব্যয়নাশাদি হেতু বৃথা তাপ প্রাপ্ত হয়।

৩৮ অন্থ। দেহরূপ গৃহের অধীশ্বরী বুদ্ধি, দুঃখভোগরূপ মহারোগের নিদানভূত। যাহা হইতে মূঢ়গণ মহানিদ্রাদি ত্যাগ করিতে পারে না।

৩৯ অন্থ। যদি বিবেকহেতু অনাদি বুদ্ধিগার্হস্থ্য ত্যাগ না করা যায়, তবে কেবল বাহ্যবস্তুর সন্ন্যাস হইতে মোক্ষ হয় না, ইহকালে ও পরকালে অত্যন্ত অসুখ হইয়া থাকে।

समचिन्मात्ररूपेषु स्वपरात्मसु सर्वदा।
बुद्धिमात्रविवेकेन स्वपरादि-भिदा मृषा॥ ४०
चिन्मात्रे निर्गुणे स्वामिन्यारोप्यैवात्मकर्तृताम्।
स्वाम्यवज्ञापराधेन बध्यते धीः स्वकर्मभिः॥ ४१
साध्वी तु धीः पतिं दृष्ट्वा याथातथ्येन तत्परा।
ब्रह्मानन्दमयी चान्ते पतिदेहे लयं व्रजेत्॥ ४२

---

(४०) समेत्यादि।—समचिन्मात्ररूपेषु तुल्यतया चित्स्वरूपेषु इत्यर्थः। स्वपरादि-भिदा अयमात्मा स्वीयः अन्यश्च परकीय इत्यादिरूपेण पार्थक्यं मृषा अयथार्थरूपेत्यर्थः। तथाहि असङ्गस्य चिन्मात्रस्वरूपस्य आत्मनः स्वीयत्वाद्यभावेन तादृशविज्ञानं भ्रम एवेति भावः।

(४१) चिन्मात्र इत्यादि।—निर्गुण इति असङ्गभूत इत्यर्थः। आत्मकर्तृतां कर्तृताम्। आत्मपदं सम्पातायातं कर्तृत्वमात्रस्यैव विवक्षितत्वात्। अथवा आत्मनि स्वस्मिन् वर्तमानां कर्तृतामित्यर्थः। तथाहि—यथा काचित् स्त्री स्वयं अपराधं कृत्वा तमपराधं स्वामिनि समारोप्य विदितमिथ्यावचना राजपुरुषैर्बध्यते तथेति तात्पर्य्यम्।

(४२) साध्वीत्यादि। साध्वी सत्त्वगुणाधिक्येन प्रकर्षवती अथच पतिव्रता। तत्परेति आत्मध्यानमात्रपरायणा, स्वामिमात्रानुरक्ता च। पतिदेहे आत्मस्वरूपे, स्वामिशरीरे च। आत्मध्याननिष्ठाया बुद्धिलयसाधकत्वात्, पतिसहमरणादिना पतिदेहेनैव स्वदेहलयाच्च इत्यर्थः।

---

৪০ অনু। চিন্মাত্ররূপে সর্ব্বদা সকল আত্মারই তুল্যতা রহিয়াছে, বুদ্ধিমাত্রবিবেকহেতু উহাতে স্বপরাদি বুদ্ধি যথার্থ নহে।

৪১ অনু। চিন্মাত্র নির্গুণ স্বামিভূত আত্মায় কর্ত্তৃতা আরোপ করিয়া স্বামীর অবজ্ঞারূপ অপরাধবশতঃ নিজ কর্ম্মহেতুই বুদ্ধি বদ্ধ হইয়া থাকে।

